SASTRI
RESEARCH INSTITUTE
84, R. H. ROAD, MADRAS. 4



१०. प्रक. परविषये कृत्याकृत्यपक्षोपग्रहः।

**कृत्याकृत्यपक्षोपग्रहः स्वविषये व्याख्यातः परविषये वाच्यः।**

**संश्रुत्यार्थान् विप्रलब्धः, तुल्यकारिणोः शिल्पे वोपकारे वा विमानितः, वल्लभावरुद्धः, समाहूय पराजितः, प्रवासोपतप्तः, कृत्वा व्ययमलब्धकार्यः, स्वधर्माद् दायाद्याद् वोपरुद्धः, मानाधिकाराभ्यां भ्रष्टः, कुल्यैरन्तर्हितः, प्रसभाभिमृष्टस्त्रीकः, काराभिन्यस्तः, परोक्तदण्डितः, मिथ्याचारवारितः, सर्वस्वमाहारितः, बन्धनपरिक्लिष्टः, प्रवासितबन्धुरिति क्रुद्धवर्गः।**

---

**परविषये कृत्याकृत्यपक्षोपग्रह** इति सूत्रम्। परविषये शत्रुजनपदे, कृत्याकृत्यपक्षोपग्रहः कृत्यपक्षस्य अतुष्टवर्गस्य अकृत्यपक्षस्य तुष्टवर्गस्य च उपग्रहः उपजापादिना सङ्ग्रहः स्वायत्तीकरणम् इहोच्यत इत्यर्थः।

प्रकरणसङ्गतिमाह — **कृत्याकृत्ये**त्यादि।

कृत्या नाम क्रुद्धलुब्धभीतमानिन इत्युक्तम्। तत्र प्रथमं क्रुद्धान् व्युत्पादयति — **संश्रुत्ये**ति। अर्थान् संश्रुत्य विप्रलब्धः ददामीति प्रतिज्ञाय तददानेन वञ्चितः, शिल्पे उपकारे वा तुल्यकारिणोः समानं कर्म कृतवतोर्मध्ये विमानितः अनभिनन्दितोऽन्यतरः, वल्लभावरुद्धः राज्ञः परमाप्तसेवकैः प्रतिषिद्धराजकुलप्रवेशः, समाहूय पराजितः द्यूतक्रीडार्थमाहूय हृतधनः, प्रवासोपतप्तः राजकुलेनावरोधेन स्वेप्सितदेशवासप्रतिबन्धः प्रवासः तेन दुःखितः, कृत्वा व्ययमलब्धकार्यः कार्यार्थं राजवल्लभादिभ्य उत्कोचं दत्त्वाप्यलब्धप्रयोजनः, स्वधर्माद् दायाद्याद् वा उपरुद्धः स्वधर्मो दाक्षिणात्यानां मातुलकन्यापरिणयादिः दायाद्यं दायत्वेन भोग्यं भागिनेयानां केरलेषु मातुलधनं तादृशात् स्वधर्माद् दायाद्याच्च प्रतिषिद्धः, मानाधिकाराभ्यां भ्रष्टः मानः छत्रान्दोलिकादिः परिच्छदबहुमानः अधिकारः समाहर्तृसन्निधातृप्रभृतिनियोगः ताभ्यां प्रच्यावितः, कुल्यैः कुलभवैः राजबन्धवादिभिर्निमित्तभूतैः अन्तर्हितः अप्रकाशं गतः, अपलपितगुणत्वादित्यर्थम्। प्रसभाभिमृष्टस्त्रीकः बलात्कारधर्षितदारः, काराभिन्यस्तः बन्दीकृतः, परोक्तदण्डितः अविचार्यैव परवचनप्रत्ययमात्रेण कृतदण्डः, मिथ्याचारवारितः प्राणिवधरूपत्वाद् यज्ञः पापकर्मेत्येवज्ञानीनेन मिथ्यान्यायेन आचाराद् यज्ञादिसत्कर्मानुष्ठानाद्

---

१. 'पातितः' ग. पाठः.

**स्वयमुपहतः, विप्रकृतः, पापकर्माभिख्यातः, तुल्यदोषदण्डेनोद्विग्नः, पर्यात्तभूमिः, दण्डेनोपहतः, सर्वाधिकरणस्थः, सहसोपचितार्थः, तत्कुलीनोपाशंसुः, प्रद्विष्टो राज्ञा, राजद्वेषी चेति भीतवर्गः ।**

**परिक्षीणोऽत्यात्तस्वः कदर्यो व्यसन्यत्याहितव्यवहारश्चेति लुब्धवर्गः ।**

**आत्मसम्भावितो मानकामः शत्रुपूजामर्षितो नीचैरुपहितस्तीक्ष्णः साहसिको भोगेनासन्तुष्ट इति मानिवर्गः ।**

---

वारितः, सर्वस्वमाहारितः हृतसर्वस्वः, बन्धनपरिक्लिष्टः बन्धनेन कार्येष्वयथार्हनियन्त्रणया परिक्लिष्टः, प्रवासितबन्धुः प्रवासितः स्वदेशान्निष्कासितो बन्धुः पुत्रादिर्यस्य सः, इति एवञ्जातीयः, क्रुद्धवर्गः वेदितव्य इति शेषः ।

भीतवर्गमाह— **स्वयमित्यादि** । स्वयमुपहतः धनार्थं स्वकृतेन परमारणादिना नृशंसकर्मणा दूषितः, विजिगीषुणा वा स्वयं धनदानेन नृशंसकर्म परमारणादिकं कारयित्वा दूषितः । स हि विजिगीषुसकाशाद् भीतो भवति— 'शत्रुपक्षादधिकधनलाभे मामप्ययं हन्यादि'ति विजिगीषुरात्मानमभिशङ्कतेति मत्वा । विप्रकृतः अन्तःपुरादौ विजिगीषुविरुद्धक्रियारम्भः, पापकर्माभिख्यातः ब्रह्महत्यादिपापकर्माभिशस्तः, तुल्यदोषदण्डेन उद्विग्नः स्वसमानदोषेऽन्यस्मिन् दण्डं प्रयुक्तं दृष्ट्वा भीतः मय्यपि दण्डः पतेदिति, पर्यात्तभूमिः भूम्यपहर्ता, दण्डेनोपहतः कर्शितः, सर्वाधिकरणस्थः सर्वेषु राजकीयनियोगस्थानेषु प्राप्तस्वाम्यः, सहसोपचितार्थः अकस्मात् साहसेन वा वर्धितधनः, साहसेति च पाठः । तत्कुलीनोपाशंसुः तस्य राज्ञः कुलीनं दायादम् उपाशंसुः कामुक उपाश्रित इत्यर्थः । शेषं स्फुटम् ।

लुब्धवर्गमाह—**परीत्यादि** । परिक्षीणः विनष्टसर्ववैभवः, अत्यात्तस्वः अत्यात्तं राज्ञा दण्डकररूपतयातिमात्रं गृहीतं स्वं धनं यस्य सः, कदर्यः कृपणः, व्यसनी स्त्रीपानादिव्यसनवान्, अत्याहितव्यवहारः अतिमात्रप्रयुक्तधननिमित्तव्यवहारः ।

मानिवर्गमाह—**आत्मेति** । आत्मसम्भावितः अहमतीव विद्वान् शूर इति, मानकामः धनमवधीर्य पूजामात्राभिलाषी, शत्रुपूजामर्षितः अनेन मम शत्रुः पूजित इति प्राप्तामर्षः, नीचैरुपहितः दुर्जनैः क्वचित् कार्येऽभिनिवे-

**तेषां मुण्डजटिलव्यञ्जनैर्यो यद्भक्तिः कृत्यपक्षीयस्तं तेनोपजापयेत्।**

**यथा मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत् सर्वं प्रमृद्नात्येवमयमशास्त्रचक्षुरन्धो राजान्धेन मन्त्रिणाधिष्ठितः पौरजानपदवधायाभ्युत्थितः। शक्यमस्य प्रतिहस्तिप्रोत्साहनेनापकर्तुम्, अमर्षः क्रियताम् इति क्रुद्धवर्गमुपजापयेत्।**

**यथा लीनः सर्पो यस्माद् भयं पश्यति तत्र विषमुत्सृजत्येवमयं राजा जातदोषाशङ्कस्त्वयि पुरा क्रोधविषमुत्सृजति, अन्यत्र गम्यताम् इति भीतवर्गमुपजापयेत्।**

**यथा श्वगणिनां धेनुः श्वभ्यो दुग्धे न ब्राह्मणेभ्यः एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नात्मगुणसम्पन्नेभ्यः। असौ राजा पुरुषविशेषज्ञः सेव्यतामिति लुब्धवर्गमुपजापयेत्।**

---

शितः, तीक्ष्णः आत्मत्यागी, साहसिकः अतर्कितप्रवृत्तिः साहसं तद्वान्, भोगेन असन्तुष्टः वल्लतया भृत्या तृप्तिमप्राप्तः।

क्रुद्धादीनां कृत्यपक्षीयाणां मध्ये यो यदभिलषति तं मुण्डजटिलव्यञ्जनमुखेन तद्दानपूर्वं भेदयेदित्याह — तेषामित्यादि।

तत्र क्रुद्धवर्गस्य भेदनप्रकारमाह—**यथा मदान्ध** इत्यादि। मत्तेनाधिष्ठितः प्रमादिना हस्तिपकेन नियम्यमानः। आसादयति दृष्टिविषयं करोति। प्रमृद्नाति नाशयति। अशास्त्रचक्षुः राजशास्त्रलक्षणनेत्रहीनः। अभ्युत्थितः उद्युक्तः। प्रतिहस्तिप्रोत्साहनेन प्रत्यर्थ्युत्साहजननेन। अमर्षः क्रियतां प्रकोप उत्पाद्यतां, राज्ञः।

भीतवर्गस्याह—**यथा लीन** इत्यादि। भयं पश्यति आत्मनो विपत्तिमभिशङ्कते। पुरा जातदोषाशङ्कः पूर्वमुत्पन्नदोषवितर्कः, अथवा पुराशब्द उत्सृजतीत्यनेन सम्बध्यते उत्स्रक्ष्यतीत्यर्थः। 'यावत्पुरानिपातयोर्लट्' इति लट्।

लुब्धवर्गस्याह — **यथा श्वगणिना**मित्यादि। श्वगणिनां धेनुः श्वगणस्वामिनां गौः। दुग्धे क्षीरं स्रावयति। अयं सन्निहितः। दुग्धे फलं ददाति। असौ विप्रकृष्टः सामन्तः। पुरुषविशेषज्ञः पुरुषतारतम्यवेदी।

---

१. 'हतिप्रो' ग. पाठः.

यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषामेवमयं राजा नीचो नीचानामेवोपभोग्यो न त्वद्विधानामार्याणाम्। असौ राजा पुरुषविशेषज्ञः तत्र गम्यतामिति मानिवर्गमुपजापयेत्।

तथेति प्रतिपन्नांस्तान् संहितान् पणकर्मणा।
योजयेत यथाशक्ति सापसर्पान् स्वकर्मसु ॥
लभेत सामदानाभ्यां कृत्यांश्च परभूमिषु।
अकृत्यान् भेददण्डाभ्यां परदोषांश्च दर्शयेत् ॥

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
चतुर्दशोऽध्यायः परविषये कृत्याकृत्यपक्षोपग्रहः ॥

मानिवर्गस्याह — यथा चण्डालेत्यादि। चण्डालोदपानः चण्डालकूपः। आर्याः शिष्टाः।

तथेतीति। तथेति प्रतिपन्नान् उपजापानुरोधेन परपक्षप्रवेशमङ्गीकृतवतः, पणकर्मणा संहितान् सत्यशपथादिना कृतसन्धानान्, तान् कृत्यान्, सापसर्पान् चारसहितान् कृत्वा, यथाशक्ति स्वकर्मसु योजयेत नियुञ्जीत ॥

लभेतेति। परभूमिषु परजनपदे, कृत्यान्, सामदानाभ्यां, लभेत साधयेत्, भेदस्य तेषु स्वत एव सिद्धत्वादनुपयोग इत्यभिप्रायः। अकृत्यान् भेददण्डाभ्यां लभेत। अकृत्यान् प्रति भेदनसाधनेषु परदोषप्रदर्शनस्य मुख्यत्वादाह — परदोषान् दर्शयेच्च बोधयेच्च ॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
चतुर्दशोऽध्यायः परविषये कृत्याकृत्यपक्षोपग्रहः ॥

## ११. प्रक. मन्त्राधिकारः ।

**कृतस्वपक्षपरपक्षोपग्रहः कार्यारम्भांश्चिन्तयेत् । मन्त्रपूर्वाः सर्वारम्भाः ।**

**तदुद्देशः संवृतः कथानामनिःस्रावी पक्षिभिरप्यनालोक्यः स्यात् । श्रूयते हि शुकशारिकाभिर्मन्त्रो भिन्नः श्वभिरन्यैश्च तिर्यग्योनिभिः । तस्मान्मन्त्रोद्देशमनायुक्तो नोपगच्छेत् । उच्छिद्येत मन्त्रभेदी ।**

**मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्याम् । इङ्गितमन्यथावृत्तिः । आकृतिग्रहणमाकारः ।**

---

**मन्त्राधिकार** इति सूत्रम् । कर्मणामारम्भोपायादिकार्यनिरूपणं मन्त्रः, स इहाधिक्रियत इत्यर्थः । सर्वोपधाशुद्धा मन्त्रिणः कर्तव्या इत्युक्तम् । मन्त्रस्वरूपं तु नोक्तम् । तदिहोच्यत इति सम्बन्धः ।

स्वविषये परविषये च कृत्याकृत्यानां स्वानुकूलीकरणानन्तरं विजिगीषुणा स्वविषये दुर्गादीनां परविषये सन्धिविग्रहादीनां च कर्मणाम् आरम्भाः विमृश्य राज्ञा निर्धारयितव्या इत्याह — **कृते**त्यादि । चिन्तयेत् मन्त्रयेत् । चिन्तने हेतुमाह — **मन्त्रपूर्वाः सर्वारम्भा** इति । प्रथमं मन्त्रः तत आरम्भ इत्येष क्रमः कर्मसमृद्धिफलो लोके नियतो यस्मात् तस्माच्चिन्तयेदित्यभिप्रायः ।

मन्त्रदेशमाह — **तदि**त्यादि । तदुद्देशः मन्त्रयोग्यो देशः, संवृतः सर्वत आवृतः । कथानां वचनानाम् अनिस्स्रावी निस्स्रावो बहिर्निःष्यन्दः तद्वान् न भवतीत्यनिःस्रावी, अन्तः कथ्यमानं बहिःस्थितैर्यथा न श्रूयेत तथा सन्निवेशित इत्यर्थः । पक्षिभिरपि अनालोक्यः अदृश्यश्च स्यात् । कुत इत्यत आह—**श्रूयते ही**त्यादि । भिन्नः प्रकाशितः । **तस्मा**दित्यादि । अनायुक्तः राज्ञा मन्त्रकर्मणि अनियुक्तः । मन्त्रभेदने दण्डमाह — **उच्छिद्ये**तेति । उच्छेदनमुन्मूलनम् ।

विनैव वचनमायुक्तानामिङ्गिताकाराभ्यामपि मन्त्रभेदो भवतीत्याह— **मन्त्रभेदो ही**त्यादि । अन्यथावृत्तिः स्वाभाविकचेष्टितविलक्षणं चेष्टितम् । आकृतिग्रहणम् आकारः आकृतिः अङ्गसंस्थानं तद्रूपं ग्रहणं भावज्ञानसाधनं स्वाभाविकाकृतिविलक्षणो मुखमालिन्यादिराकृतिविशेष इत्यर्थः, स आकारः आकारशब्दवाच्यः ।

**तस्य संवरणम् आयुक्तपुरुषरक्षणमा कार्यकालादिति। तेषां हि प्रमादमदसुप्तप्रलापकामादिरुत्सेकः प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्ति। तस्माद् रक्षेन्मन्त्रम्।**

**मन्त्रभेदो ह्ययोगक्षेमकरो राज्ञस्तदायुक्तपुरुषाणां च। तस्माद् गुह्यमेको मन्त्रयेतेति भारद्वाजः। मन्त्रिणामपि हि मन्त्रिणो भवन्ति। तेषामप्यन्ये। सैषा मन्त्रिपरम्परा मन्त्रं भिनत्ति।**

**तस्मान्नास्य परे विद्युः कर्म किञ्चिच्चिकीर्षितम्।**
**आरब्धारस्तु जानीयुरारब्धं कृतमेव वा॥**

तस्येति। तस्य संवरणम् इङ्गिताकारयोर्गोपनं, स च तच्च तदितीह 'नपुंसकमनपुंसकेने'ति नपुंसकशेष एकवद्भावश्च। आयुक्तपुरुषरक्षणम् आयुक्तानां पुरुषाणां मन्त्राधिकृतानां दूतमन्त्रिप्रभृतीनां मन्त्रभेदस्थानेभ्यो रक्षणं च, आ कार्यकालात् कार्यसिद्धिकालमभिव्याप्य, कर्तव्यमिति शेषः। मन्त्रभेदस्थानं प्रपञ्चयति — तेषां हीति। तेषाम् आयुक्तानाम्। प्रमादमदसुप्तप्रलापकामादिः प्रमादः कार्यान्तरवैयग्र्यप्रभवमनवधानं मदो मद्यपानादिजश्चित्तविकारः सुप्तप्रलापः स्वप्नालापः कामो विषयतृष्णा एते आदयो यस्य दोषसमुदायस्य सः, उत्सेकः गर्वः, प्रच्छन्नः कुड्यान्तर्गतः श्रोता, अवमतः जडोऽयमित्यवज्ञातः, वाशब्दः समुच्चये, मन्त्रं भिनत्ति रहसि विमृश्य निर्णीतमर्थं बहिरुद्गिरति। तस्मादिति। तस्मात् प्रमादादेरवमतपर्यन्ताद् वर्गात्, मन्त्रं रक्षेत्।

मन्त्रभेदो हीत्यादि। अयोगक्षेमकरः योगक्षेमविघातकः। गुह्यं गोप्यमर्थम्। एकः मन्त्रिणापि द्वितीयेन विनाभूतः। भारद्वाजपक्षस्य समर्थकमाह — मन्त्रिणामपीत्यादि। मन्त्रिपरम्परा मन्त्रिसन्तानः।

तस्मादिति। तस्मात् मन्त्रभेदप्रसङ्गात्, अस्य विजिगीषोः, चिकीर्षितं कर्तुमिष्टं, कर्म, परे अन्ये, न विद्युः, किन्तु आरब्धारः कर्मानुष्ठानोपक्रमकर्तारः, जानीयुः। तेऽपि कदा जानीयुः, आरब्धं जानीयुः आरम्भानन्तरमनुमिनुयुः, आरम्भमात्रेण कर्मणः कृत्स्ना गतिरनुमातुं शक्या चेत्। यदि न शक्या तेऽप्या निष्पत्तेर्न जानीयुरित्यभिप्रायेणाह — कृतमेव वेति॥

---

१. न्ययो' ख. पाठः. २. 'न्ति। सै' ग. पाठः.

**नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः। प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयबलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्। तस्माद् बुद्धिवृद्धैः सार्धमासीत मन्त्रम्।**

**न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम्।**
**बालस्याप्यर्थवद् वाक्यमुपयुञ्जीत पण्डितः॥**

**एतन्मन्त्रज्ञानं नैतन्मन्त्ररक्षणमिति पाराशराः। यदस्य कार्यमभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्—कार्यमिदमेवमासीदेवं वा यदि भवेत् तत् कथं कर्तव्यमिति। ते यथा ब्रूयुः तत् कुर्यात्। एवं मन्त्रोपलब्धिः संवृतिश्च भवतीति।**

---

तदिदं भारद्वाजमतमाक्षिप्य विशालाक्षः प्रत्यवतिष्ठत इत्याह—**नैकस्येत्यादि**। प्रत्यक्षपरोक्षेत्यादिवाक्येन राजकर्मणः सर्वस्य सहायसापेक्षत्वं मन्त्रिपुरोहितोत्पत्तिप्रकरणोक्तं स्मारयति। अज्ञातस्य ज्ञानं, ज्ञातस्य निश्चयेन दृढीकरणम्, इदमदो वेत्यर्थयोर्द्विधाभवने सन्देहनिवर्तनम्, अंशेनोपलब्धस्यांशान्तरानुमितिरित्येवञ्जातीयं कार्यं मन्त्रिसाध्यमित्याह— **अनुपलब्धस्येत्यादिना**। **तस्मादिति**। तस्माद् राजवृत्तेः सहायसापेक्षत्वनियमात्, **बुद्धिवृद्धैः** बुद्धिप्रशस्तैः सार्धं, मन्त्रम् आसीत मन्त्रमुद्दिश्यासीत। मन्त्रशब्दस्य भावार्थत्वाद्वा 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वक्तव्यम्' इति कर्मसंज्ञायां द्वितीया।

**न कञ्चिदित्यादि**। नावमन्येत नावजानीयात्। उपयुञ्जीत स्वीकुर्वीत॥

सोऽयं विशालाक्षपक्षो मन्त्रज्ञानानुकूलः, न तु मन्त्ररक्षणानुकूल इति वदन्तः पराशरशिष्याः प्रत्यवतिष्ठन्ते इत्याह—**एतदित्यादि**। कस्तर्हि मन्त्ररक्षणोपाय इत्याह—**यदस्येति**। अस्य यत् कार्यम्, अभिप्रेतं मन्त्रयितुमिष्टं, तत्प्रतिरूपकं तत्प्रतिबिम्बभूतं तत्समानरूपं कार्यं कथागतं पुराणगतं वापदिश्य, मन्त्रिणः पृच्छेत्। कथं पृच्छेत्, इदं कार्यम्, एवमासीद् यदि अनेन प्रकारेण निष्पन्नं चेत्, अथवा एवं भवेद् यदि अनेन प्रकारेण निष्पाद्यं चेत्, कथं कर्तव्यं तर्हि केन प्रकारेणानुष्ठेयमिति। ते पृष्टा मन्त्रिणः, यथा ब्रूयुः, तत् कुर्यात् अनुतिष्ठेत्। एवम् अस्मिन् मन्त्रानुष्ठानप्रकारे, मन्त्रोपलब्धिः संवृतिश्च भवति मन्त्रज्ञानं मन्त्रगोपनं च सिध्यतीति।

नेति पिशुनः । मन्त्रिणो हि व्यवहितमर्थं वृत्तमवृत्तं वा पृष्टमनादरेण ब्रुवन्ति प्रकाशयन्ति वा । स दोषः । तस्मात् कर्मसु ये येष्वभिप्रेतास्तैः सह मन्त्रयेत् । तैर्मन्त्रयमाणो हि मन्त्रबुद्धिं गुप्तिं च लभत इति ।

नेति कौटल्यः । अनवस्था ह्येषा । मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत । मन्त्रयमाणो ह्येकेनार्थकृच्छ्रेषु निश्चयं नाधिगच्छेत् । एकश्च मन्त्री यथेष्टमनवग्रहश्चरति । द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्यामवगृह्यते, विगृहीताभ्यां विनाश्यते । त्रिषु चतुर्षु वा नैकान्तं कृच्छ्रेणोपपद्यते महादोषम् । उपपन्नं तु भवति । ततः परेषु कृच्छ्रेणार्थनिश्चयो गम्यते, मन्त्रो वा रक्ष्यते ।

तदुभयमपि न सिध्यतीति वदन् नारदः प्रत्यवतिष्ठते — **नेतीति** । उभयासिद्धौ हेतुमाह — **मन्त्रिणो** हीत्यादि । व्यवहितं रूपान्तरावच्छादितस्वरूपम् । अनादरेण ब्रुवन्ति अनास्थया कथयन्ति नतु पर्यालोच्य कथयन्ति, प्रकाशयन्ति वा भिन्दन्ति च, अस्मास्वविश्वस्तोऽयं राजास्मदनुष्ठेयमप्यर्थमस्मासु न प्रकाशयतीति कोपादिति भावः । **तस्मादिति** । तस्माद् यथोक्तदोषप्रसङ्गात्, ये येषु कर्मसु अभिप्रेता मन्त्रणानुष्ठाननिपुणतया विश्वस्ततया चाभिमताः, तैः सह मन्त्रयेत् । तथा मन्त्रणे गुणमाह — **तैरित्यादि** ।

इदमपि मतमयुक्तमित्याह — **नेतीति** । कुत इत्यत्राह — **अनवस्थेति** । हि यतः एषा अनवस्था यथोक्ताभ्युपगमोऽनवस्थापादकः । अयं भावः — तत्तत्कर्माभिप्रेतैः सह मन्त्रणाङ्गीकारे कर्मणां बहुत्वाद् बहुप्रकारत्वाच्च मन्त्रीयत्तानवधारणप्रसङ्ग इति । स्वमतमाह — **मन्त्रिभिस्त्रिभिरित्यादि** । एकेन सह मन्त्रणे दोषमाह — **मन्त्रयमाण** इत्यादि । अर्थकृच्छ्रेषु कार्यसङ्कटेषु क्लेशनिर्धारणीयेषु कार्येष्वित्यर्थः । अनवग्रहः निष्प्रतिद्वन्द्वः । चरति वक्ति अनुतिष्ठति च । द्वाभ्यां सह मन्त्रणे दोषमाह — **द्वाभ्यामित्यादि** । संहताभ्याम् अवगृह्यते एकमताभ्यां सचिवाभ्यां स्ववशं नीयते राजा, विगृहीताभ्यां विनाश्यते परस्परविपरीतमताभ्यां सचिवाभ्यां कार्यहानिं प्राप्यते । त्रिचतुरमन्त्रिपक्षे विशेषमाह — **त्रिष्विति** । त्रिषु चतुर्षु वा मन्त्रसहायेषु,

१. 'ष्टा अना', २. 'ह्यते । तत् त्रि', ३. 'षः उपपन्नस्तु भ' ग. पाठः.

**देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत ।**

**कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद् देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः । तानेकैकशः पृच्छेत् समस्तांश्च । हेतुभिश्चैषां मतिप्रविवेकान् विद्यात् । अवाप्तार्थः कालं नातिक्रामयेत् । न दीर्घकालं मन्त्रयेत । न च तेषां पक्ष्यैर्येषाम् अपकुर्यात् ।**

---

महान् दोषोऽनर्थो येन तत महादोषं परमानर्थहेतुभूतं राजावग्रहणादिकं, नैकान्तं नियतं न भवति, कृच्छ्रेण उपपद्यते कदाचिदुत्पाद्यमानमपि महता यत्नेनोत्पद्यते नाल्पेन यत्नेनेत्यर्थः । महादोष इति पाठे एकद्वमन्त्रिपक्षोक्तो महान् दोष इत्यर्थः कर्मधारयेण लभ्यः । उपपन्नं तु भवति मन्त्रनिश्चयेन मन्त्ररक्षणेन च उपपत्तियुक्तं भवति, अर्थाच्चिन्त्यमानं कर्म । पञ्चादिषु मन्त्रसहायेषु को दोषस्तत्राह — तत इत्यादि । ततः परेषु चतुर्भ्योऽधिकेषु पञ्चादिषु ।

देशकालकार्यापेक्षया कदाचिदेकेन द्वाभ्यां च सह मन्त्रणम्, असहायस्य सतो वा मन्त्रणमिष्यत इत्याह — देशेत्यादि । यथासामर्थ्यम् आत्मात्ममन्त्रिसामर्थ्यानतिक्रमेण ।

अथ मन्त्रस्य पञ्चाङ्गत्वं व्युत्पादयति — कर्मणामिति । कर्मणाम् आरम्भोपायः स्वविषये परिखाप्राकारादिरूपदुर्गादिसृष्टिलक्षणानां परविषये सन्धिविग्रहादिनिमित्तदूतसम्प्रेषणादिलक्षणानां च कार्याणामुपक्रमोपायः, पुरुषद्रव्यसम्पत् स्वविषये पुरुषाः दुर्गादिनिर्माणकुशलास्तक्षायस्कारादयः द्रव्याणि पृथुच्छदादिदारव्यवृक्षादीनि परविषये पुरुषाः सन्ध्याद्यनुष्ठानकुशलाः दूतसेनापतिप्रभृतयः द्रव्याणि रत्नस्वर्णादीनि, तेषां सम्पद् गुणवत्ता समृद्धिश्च, देशकालविभागः देशः स्वविषये दुर्गाद्यारम्भे जनपदमध्यान्तादिरनूपादिश्च कालः सुभिक्षदुर्भिक्षादिर्वर्षादिश्च परविषये सन्ध्यादौ देशः महाफलोर्वरादिः कालः अभियोगानभियोगाद्यवस्था तेषां सर्वेषां विभागः विवेकः विनिपातप्रतीकारः विनिपातो विघ्नो दुर्गनिर्माणादिविषयः सन्धिपुरुषप्रेषणादिविषयश्च तस्य प्रतीकारः प्रशमनं, कार्यसिद्धिः कर्मफलं क्षयः स्थानं वृद्धिरित्येवं त्रिरूपम् । इति पञ्चाङ्गो मन्त्रः । मन्त्रविषयमर्थं मन्त्रिष्वेकैक-

**मन्त्रिपरिषदं द्वादशामात्यान् कुर्वीतेति मानवाः ।**

**षोडशेति बार्हस्पत्याः ।**

**विंशतिम् इत्यौशनसाः ।**

**यथासामर्थ्यम् इति कौटल्यः ।**

**ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः । अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसम्पदं च कर्मणां कुर्युः । आसन्नैः सह कार्याणि पश्येत्, अनासन्नैः सह पत्रसम्प्रेषणेन मन्त्रयेत । इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम् । स तच्चक्षुः । तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः ।**

---

माहूयान्यासन्निधाने पृच्छेत् — कस्तेऽत्राभिप्राय इति, संमेल्य च सभायां तान् सर्वान् 'कोऽत्र वोऽभिप्राय' इति पृच्छेदित्याह — **तानेकैकश इत्यादि । हेतुभिरित्यादि** । एषां मतिप्रविवेकान् अभिप्रायविभागान्, हेतुभिः विद्यात् कारणैः पर्यालोचयेद् अर्थनिश्चयार्थम् । अवाप्तार्थः निश्चितार्थः । अपकार्यजनबन्धुभिः सह न मन्त्रयेतेत्याह — **न च तेषामित्यादि ।**

अथ राजनिर्णीतकार्यजातानुष्ठान-राजनिर्णेतव्यनवनवकार्यजातोल्लेखनादिसर्वराष्ट्रकर्मनिर्वहणप्रधाना मन्त्रिपरिषन्नाम काचिद् राज्ञो भवति । तस्यां राज्ञा कति मन्त्रिणः पारिषदाः कर्तव्या इत्याकाङ्क्षायां द्वादशेति मनुशिष्याणां षोडशेति बार्हस्पत्यानां विंशतिरित्यौशनसानां कार्यानुष्ठातृपुरुषसामर्थ्यानुगुण्येन यथोक्तसङ्ख्यास्तन्न्यूनसङ्ख्यास्तदधिकसङ्ख्या वेत्यात्मनश्च मतमित्याह — **मन्त्रिपरिषदमित्यादि ।**

पारिषदानां व्यापारमाह — **ते हीत्यादि** । स्वपक्षं परपक्षं च चिन्तयेयुः स्वपक्षगतं परपक्षगतं च कार्यं समीक्षापूर्वमनुतिष्ठेयुः । कर्मणां मध्ये अकृतारम्भम् अकृतस्य कर्मणोऽनुष्ठानोपक्रमम्, आरब्धानुष्ठानम् उपक्रान्तस्य परिसमापनम्, अनुष्ठितविशेषं परिसमापितस्य संस्कारं परिनिष्ठितप्रासादादिशोभार्थसुधालेपचित्रार्पणादिजातीयं, नियोगसम्पदं नियोगाः तत्तत्कर्मकराधिकाराः तेषां सम्पदं गुणवत्तां बाहुल्यं च, कुर्युः । मन्त्रिपरिषत्सभ्येषु आसन्नानासन्नेषु विषये राजा कथं व्यवहरेदित्येतदाह — **आसन्नैरित्यादि** पत्रस प्रेषणेन लिखितसकलार्थस्य लेखस्य प्रेषणेन । इत्थं बहुमन्त्रिबुद्धिसाहाय्येनार्थदर्शनस्य महाफलतयात्मसमर्थितस्य स्तुत्यर्थं सहस्राक्षपदानिर्वचन

**आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं चाहूय ब्रूयात् । तत्र यद् भूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुस्तत् कुर्यात् । कुर्वतश्च —**

**नास्य गुह्यं परे विद्युश्छिद्रं विद्यात् परस्य च ।**
**गूहेत् कूर्म इवाङ्गानि यत् स्याद् विवृतमात्मनः ॥**
**यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति ।**
**एवमश्रुतशास्त्रार्थो न मन्त्रं श्रोतुमर्हति ॥**

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
पञ्चदशोऽध्यायः मन्त्राधिकारः ॥

भङ्ग्यार्थवादमाह—**इन्द्रस्य हीति** । स इन्द्रः, तच्चक्षुः तद् ऋषिसहस्रं मन्त्रिपरिषदात्मकं चक्षुः कार्यतत्त्वदर्शनसाधनं यस्य सः । द्व्यक्षमिति विशेषणेन वस्तुतः पुरुषान्तरवद् द्विनयन एवासौ सहस्राक्ष इत्युपचर्यत इति दर्शितम् ।

प्राणापायशङ्कावहे कार्ये पूर्वोक्तान् मन्त्रिणः मन्त्रिपरिषदं चेमां मेलयित्वा तत्त्वं पृच्छेदित्याह— **आत्ययिक इत्यादि** । तत्र भूयिष्ठा बहुतमाः, यद् ब्रूयुः, तत् कुर्याद् अनुतिष्ठेत्, अथवा यत् कार्यसिद्धिकरं ब्रूयुः अर्थाद् अभूयिष्ठा अपि, तत् कुर्यात् । कुर्वतश्चेति वक्ष्यमाणश्लोकान्वयि ।

**नास्येति, यथा ह्यश्रोत्रिय** इति च श्लोकावतिरोहितार्थौ ॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
पञ्चदशोऽध्यायः मन्त्राधिकारः ॥

१२. प्रक. दूतप्रणिधिः ।

**उद्धृतमन्त्रो दूतप्रणिधिः । अमात्यसम्पदोपेतो निसृष्टार्थः, पादगुणहीनः परिमितार्थः, अर्धगुणहीनः शासनहरः ।**

**सुप्रतिविहितयानवाहनपुरुषपरिवापः प्रतिष्ठेत । शासनमेवं वाच्यः परः, स वक्ष्यत्येवं, तस्येदं प्रतिवाक्यम्, एवमतिसन्धातव्यम् इत्यधीयानो गच्छेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेत् । अनीकस्थानयुद्धप्रतिग्रहापसारभूमीरात्मनः परस्य चावेक्षेत । दुर्गराष्ट्रप्रमाणं सारवृत्तिगुप्तिच्छिद्राणि चोपलभेत । पराधिष्ठानमनुज्ञातः प्रवि-**

---

**दूतप्रणिधिरिति** सूत्रम् । दूता नाम निसृष्टार्थाः परिमितार्थाः शासनहरा इति त्रिप्रकाराः, तेषां प्रणिधानं परेषु सन्देशदानपूर्वं प्रेषणमिहाभिधीयत इति सूत्रार्थः ।

**उद्धृतेति** । दूतप्रणिधिः दूतस्य प्रणिधानम्, उद्धृतमन्त्रः उद्धृतः निर्धारितार्थः मन्त्रः यस्मिन् स तथाभूतः, भवति । मन्त्रार्थनिर्धारणोत्तरकालकार्यं दूतसम्प्रेषणमित्यर्थः । एवञ्च मन्त्रकथानन्तरं दूतसम्प्रेषणप्रस्तावः सङ्गत इत्यभिप्रायः । पूर्वोक्तजानपदत्वाद्यमात्यसम्पद्युक्तो दूतो निसृष्टार्थः, तस्मात् पादगुणप्रत्यवरः परिमितार्थः, अर्धगुणप्रत्यवरः शासनहरः इत्याह— **अमात्यसम्पदेत्यादि** ।

दूतकरणीयमाह — **सुप्रतिविहितेति** । सुप्रतिविहितं सम्यक् सज्जीकृतं यानं शिबिकान्दोलिकादि वाहनमश्वादि पुरुषाः शुश्रूषादिकर्मकराः परिवापः शय्यास्तरणगोणिकादिश्च यस्य सः सुप्रतिविहितयानवाहनपुरुषपरिवापः, तथाभूतः सन् प्रतिष्ठेत, दूतः शत्रुविषयं प्रति । शत्रुः स्वामिसन्देशमित्थं बोधनीयः, बोधितः स एवं वदिष्यति, तथा वदत ईदृशं प्रत्युत्तरं वक्तव्यं, शत्रोरतिसन्धानमित्थं कर्तव्यमित्येवञ्जातीयमर्थं पुनःपुनरनुसन्दधानो गच्छेदित्याह — **शासनमित्यादि** । **अटवीति** । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च अटवीपालान्तपालपुरमुख्यराष्ट्रमुख्यैश्च प्रतिसंसर्गं सख्यं गच्छेत् । दूत्यायात्मप्रयाणं तेभ्यो निवेद्य वा गच्छेदित्यर्थः । परविषयं गतस्य कर्माह—**अनीकेति** । आत्मनः, परस्य च अनीकस्थानयुद्धप्रतिग्रहापसारभूमीः अनीकस्य सैन्यस्य निवेशयोग्यभूमिं युद्धस्वीकारार्हभूमिम् अपसरणानुकूलभूमिं च, अवेक्षेत जानीयात् । दुर्गराष्ट्रप्रमाणं दुर्गराष्ट्रयोरियत्तां, सारवृत्तिगुप्तिच्छि-

शेत् । शासनं च यथोक्तं ब्रूयात् प्राणाबाधेऽपि दृष्टे । परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं,वाक्यपूजनमिष्टपरिप्रश्नं गुणकथासङ्गमासन्नमासनं सत्कारमिष्टेषु स्मरणं विश्वासगमनं च लक्षयेत् तुष्टस्य, विपरीतमतुष्टस्य । तं ब्रूयात् — दूतमुखा वै राजानस्त्वं चान्ये च । तस्मादुद्यतेष्वपि शस्त्रेषु यथोक्तं वक्तारः । तेषामन्तावसायिनोऽप्यवध्याः, किमङ्ग पुनर्ब्राह्मणाः । परस्यैतद् वाक्यमेष दूतधर्मः इति ।

वसेदविसृष्टः, पूजया नोत्सिक्तः, परेषु बलित्वं न मन्येत, वाक्यमनिष्टं सहेत, स्त्रियः पानं च वर्जयेत्, एकः शयीत, सुप्तमत्तयोर्हि

---

द्राणि सारं धान्यस्वर्णाद्युत्पत्तिं वृत्तिं जनानां जीविकां गुप्तिं रक्षां छिद्रं शत्र्वाक्रमणद्वारं च, उपलभेत । सारवृत्तिशब्दस्थाने सारवत्ताशब्दपाठः कामन्दकेन नूनं दृष्टः । अत एव स आह — "सारवत्तां च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च । छिद्रं च शत्रोर्जानीयाद्" इति । पराधिष्ठानं शत्रुगृहम्, अनुज्ञातः प्रविशेत् परानुज्ञानानन्तरं प्रविशेत् । शासनं स्वामिसन्देशं च, प्राणाबाधेऽपि दृष्टे यथोक्तं ब्रूयात् प्राणभयेऽप्युपस्थिते स्वस्वामिसन्दिष्टप्रकारं कथयेत्, नतु स्वप्राणरक्षार्थमप्यन्यथा कथयेदित्यर्थः । परतुष्टातुष्टत्वस्य तदनुगुणव्यवहारार्थं लक्षणीयत्वादाह — परस्येत्यादि । वाग्वदनदर्शनेषु प्रसन्नत्वं, दूतोच्यमानवाक्यादरः, स्वामिगतसर्वकुशलप्रश्नः, स्वामिगुणप्रस्तावेऽवधानदानं, दूतान्तिकोपवेशनं, दूतविषयो बहुमानः, स्वादुभोग्यफलादिसंविभागे दूतस्मरणं, दूतं प्रति विश्वासोपगम इत्येतैश्चिह्नैः शत्रोस्तुष्टत्वं विपरीतैरतुष्टत्वं च विदित्वा व्यवहरेदित्यभिप्रायः । तमित्यादि । तं ब्रूयात् अतुष्टं परं वक्ष्यमाणरीत्या ब्रूयात् । दूतमुखाः दूतो मुखं स्वाभिप्रायनिवेदनद्वारं येषां ते । तस्मात् दूतानां स्वस्वामिवदनस्थानीयत्वात् । उद्यतेष्वपि वधार्थमुद्धृतेष्वपि सत्सु । वक्तारः अर्थाद् दूताः । तेषां दूतानां मध्ये । अन्तावसायिनोऽपि चण्डाला अपि । किमङ्ग पुनर्ब्राह्मणाः ब्राह्मणा अवध्या इति किमु वक्तव्यमित्यर्थः ।

वसेदिति । अविसृष्टः वसेत् यावद्विसर्जनम् । पूजया नोत्सिक्तः गर्वितो न भवेत् । परेषु बलित्वं न मन्येत अहं बलवानिति मतिं शत्रुसकाशे

१. 'खेन रा', २. 'न्तेवासिनो' ग. पाठः.

**भावज्ञानं दृष्टम् । कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं रागापरागौ भर्तरि रन्ध्रं च प्रकृतीनां तापसवैदेहकव्यञ्जनाभ्यामुपलभेत । तयोरन्तेवासिभिश्चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा, तेषामसम्भाषायां याचकमत्तोन्मत्तसुप्तप्रलापैः पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा चारमुपलभेत । उपलब्धस्योपजापमुपेयात् । परेण चोक्तः स्वासां प्रकृतीनां परिमाणं नाचक्षीत । सर्वं वेद भवानिति ब्रूयात्, कार्यसिद्धिकरं वा ।**

---

न प्रकाशयेत् । अनिष्टं वाक्यं परोक्तं सहेत । स्त्रियः, पानं मद्यसेवनं च वर्जयेत् । एकः असहायः शयीत । पानवर्जनैकशयनयोः कारणमाह—हि यस्मात्, सुप्तमत्तयोः, भावज्ञानं स्वप्नप्रलापमदप्रलापाभ्यां हृदयवेदनं दृष्टं प्रत्यक्षानुभूतम् । **कृत्यपक्षेति** । कृत्यपक्षोपजापं कृत्यवर्गस्य भेदनम्, अकृत्यपक्षे, गूढप्रणिधानं तीक्ष्णरसदसामादिप्रयोगं, प्रकृतीनाम् अमात्यादीनां भर्तरि रागापरागौ रन्ध्रं च द्वेषस्थानं च, तापसवैदेहकव्यञ्जनाभ्यां संस्थाभ्याम्, उपलभेत । **तयोरिति** । तयोरन्तेवासिभिः तापसवैदेहकयोः शिष्यैः, चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा भिषग्वेषैः पाषण्डवेषैः उभयवेतनैश्च पूर्वोक्तैर्वा, चारम् उपलभेत परचर्या विद्यात् । तेषामसम्भाषायां तापसव्यञ्जनादीनां सम्भाषणासौकर्ये, याचकमत्तोन्मत्तसुप्तप्रलापैः तेषां भैक्षकालभवैः प्रलापैः मत्तसाधारणैरुन्मत्तसाधारणैः सुप्तसाधारणैश्च प्रलापैः, पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा पुण्यस्थानेषु नदीतीरजलमण्डपमुनिगृहादिषु देवगृहेषु च गूढपुरुषान्योन्यसम्पातयोग्येषु भित्त्यर्पिताभिरालेख्यविशेषसंज्ञाभिरक्षरविशेषसंज्ञाभिर्वा, चारमुपलभेत । उपलब्धस्य परवृत्तस्य, उपजापम् उपेयाद् उपलब्धपरवृत्तानुरूपं भेदोपायं प्रयुञ्जीत, यथापेक्षम् । परेण, उक्तश्च पृष्टश्च, स्वासाम् आत्मीयानां प्रकृतीनां स्वाम्यमात्यादीनां परिमाणम् इयत्तां सार फल्गुतां वा, नाचक्षीत । तत्र किमुत्तरं प्रतिपद्येत, तत्राह—**सर्वमिति** । भवान् सर्वं वेद चारचक्षुषा भवता न किञ्चिदत्राविदितमस्तीत्यर्थः, इति ब्रूयात् स्तुयात् । यदि स्तुत्या परो न परितुष्यति तदा किं कर्तव्यं तत्राह — कार्यसिद्धिकरं वा ब्रूयात् परिमाणं यावद् उच्यमानं दूतकार्यसिद्धिकरं स्यात्, तावद् ब्रूयात् न कृत्स्नमित्यर्थः ।

---

१. 'हविचि' ग. पाठः.

**कार्यस्य सिद्धावुपरुध्यमानस्तर्कयेत् किं भर्तुर्मे व्यसनमासन्नं पश्यन्, स्वं वा व्यसनं प्रतिकर्तुकामः, पार्ष्णिग्राहासारावन्तःकोपमाटविकं वा समुत्थापयितुकामः, मित्रमाक्रन्दं[1] वा व्यापादयितुकामः, स्वं वा परतो विग्रहमन्तःकोपमाटविकं वा प्रतिकर्तुकामः, संसिद्धं मे भर्तुर्यात्राकालमभिहन्तुकामः, सस्यकुप्यपण्यसङ्ग्रहं दुर्गकर्म बलसमुत्थानं वा कर्तुकामः, स्वसैन्यानां वा व्यायामदेशकालावाकाङ्क्षमाणः, परिभवप्रम-**

यदि परो दूतोपक्षिप्तं सन्ध्यादिकार्यमुचितकालेऽप्यसाधयन् 'स्थीयतां तावदिह त्वया कञ्चित् कालम् । अभिमतं ते करिष्यामी'त्युक्त्वा दूतं स्वपुरे चिरमुपरुन्धे, तदा दूतः किं कुर्यात्, तत्राह — **कार्यस्ये**त्यादि । कार्यस्यासिद्धाविति पाठे परः कार्यं च दूतस्य न साधयति, प्रतिजिगामिषुं च दूतं न विसर्जयतीति रीत्यावतरणिका बोद्धव्या । तर्कयेद् उपरोधकारणं विकल्प्य चिन्तयेत् । तर्कणप्रकाराः 'किं भर्तुरि'त्यादयः । परो, मे भर्तुः स्वामिनः, व्यसनं प्रकृतिगतम्, आसन्नं सन्निकृष्टं पश्यन्, माम् उपरुणद्धि किं न विसर्जयति किम् । एवमुत्तरत्र प्रथमान्तेषु क्रिया योज्या । अथवा स्वं व्यसनं प्रतिकर्तुकामः प्रशमयितुमिच्छुः । अथवा पार्ष्णिग्राहासारौ पार्ष्णिग्राहः शत्रुमित्रभूतः स्वामिशत्रुः आसारः शत्रुमित्रमित्रं तौ समुत्थापयितुकामः स्वामिद्रोहार्थमुद्योजयितुकामः । अथवा अन्तःकोपं मन्त्र्यादिप्रकोपम् उपजापादिनोत्पादयितुकामः । अथवा आटविकं युद्धार्थमुद्योजयितुकामः, अथवा मित्रं स्वामिनः पुरस्तान्मित्रम्, आक्रन्दं स्वामिनः पृष्ठतोमित्रं वा व्यापादयितुकामः हन्तुकामः । अथवा स्वं परतो विग्रहं परेण विग्रहमुपस्थितं स्वम् अन्तःकोपं मन्त्र्यादिप्रकोपं, स्वम् आटाविकं कुपितं, प्रतिकर्तुकामः । अथवा संसिद्धं सुकरतयोपनतं, मे भर्तुः यात्राकालं शत्र्वभियानकालम् अभिहन्तुकामः । सस्यकुप्यपण्यसंग्रहं कर्तुकामः आरब्धे युद्धे सस्यादिपरिक्षयो मा मां बाधिष्टेति । अथवा दुर्गकर्म भिन्नस्फुटितदुर्गसंस्कारं कर्तुकामः । अथवा बलसमुत्थानं सैन्यवृद्धिं सैन्यस्य तत इतो विप्रकीर्णस्य समाहरणं वा कर्तुकामः । अथवा स्वसैन्यानां व्यायामदेशकालौ आकाङ्क्षमाणः शत्रुषु विक्रमणयोग्यौ देशकालावुदीक्षमाणः, मामुपरुणद्धि किम् । अथवा परिभवप्रमदाभ्यां परि-

१. 'माक्रन्दाभ्यां वा' ख. पाठः. २. 'द्दा' ग. पाठः,

**दाभ्यां वा, संसर्गानुबन्धार्थी वा मामुपरुणद्धीति। ज्ञात्वा वसेदपसरेद् वा। प्रयोजनमिष्टमवेक्षेत वा। शासनमानिष्टमुक्त्वा बन्धवधभयादविसृष्टोऽप्यपगच्छेद् अन्यथा नियम्येत।**

**प्रेषणं सन्धिपालत्वं प्रतापो मित्रसङ्ग्रहः।**
**उपजापः सुहृद्भेदो दण्डगूढातिसारणम्॥**

**बन्धुरत्नापहरणं चारज्ञानं पराक्रमः।**
**समाधिमोक्षो दूतस्य कर्म योगस्य चाश्रयः॥**

---

भवेन मन्त्र्याद्यन्तःकोपोत्पादनादिजनितेनानादरेण, प्रमदेन सहसंवासप्रीत्या च मामुपरुणद्धि किम्। अथवा संसर्गानुबन्धार्थी संसर्गो विवाहादिनिमित्तः सम्बन्धः तदर्थी अनुबन्धो दोषोत्पादः तदर्थी च, माम् उपरुणद्धि किम्। इति एवं रीत्या तर्कयेदिति सम्बन्धः। **ज्ञात्वेति।** ज्ञात्वा तर्कणपूर्वं कारणं निश्चित्य, वसेत् स्नेहनिमित्तमुपरोधनमिति निश्चये सति, अपसरेद् वा अविसृष्टोऽपि अन्यथा निश्चये सति। अथवा इष्टं प्रयोजनं स्वाम्यर्थम् अवेक्षेत स्वाम्यर्थसिद्धिमवेक्ष्य वसेत् शत्रुपुर एव वसन् स्वामिनं प्रति गूढसन्देशप्रेषणेन शत्रुदुरभिसन्धीनां प्रतिविधानं कारयेदित्यभिप्रायः। **शासनमिति।** अनिष्टं शासनं शत्रुद्विष्टं स्वामिसन्देशम्, उक्त्वा, दूतः अविसृष्टोऽपि शत्रुणा, बन्धवधभयाद् आत्मनो बन्धनं वधं वा शत्रुः करिष्यतीति शङ्कया, अपगच्छेत्। अन्यथा अनपगमने नियम्येत नियन्त्र्येत शत्रुणा।

श्लोकद्वयेन दूतकर्म संगृह्णाति—**प्रेषणमिति, बन्धुरत्नेति** च। प्रेषणं शत्रुदेशगतागतं शत्रौ स्वामिशासननिवेदनार्थं स्वामिनि शत्रुदेशवृत्तान्तस्य स्वावगतस्य निवेदनार्थं च, सन्धिपालत्वं कृतसन्धिरक्षणं, प्रतापः यथापेक्षं शत्रौ विक्रमणं, मित्रसंग्रहः, उपजापः कृत्यभेदनं, सुहृद्भेदः, दण्डगूढातिसारणं दण्डस्य सेनायाः गूढानां तीक्ष्णरसदादीनां चाक्रामणम्। गूढदण्डेत्यपि पाठः। बन्धुरत्नापहरणं बन्धूनां रत्नानां च स्वीकरणं, चारज्ञानं चाराणां गूढपुरुषाणामनुष्ठानसौष्ठवपरिज्ञानं, पराक्रमः अवसरे विक्रमणं, समाधिमोक्षः सन्धिविश्वासार्थमाहितः पुत्रादिः समाधिः तस्य मोचनं, योगस्य आश्रयश्च औपनिषदकोक्तस्य मारणादेः सेवनं च, दूतस्य कर्म भवति।

**स्वदूतैः कारयेदेतत् परदूतांश्च रक्षयेत् ।**
**प्रतिदूतापसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः ॥**

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
षोडशोऽध्यायः दूतप्रणिधिः ॥

* **स्वदूतैरि**ति । एतद् उक्तं सर्वं कर्म, स्वदूतैः कारयेत्, अर्थाद् राजा । प्रतिदूतापसर्पाभ्यां प्रतिदूतप्रतिचाराभ्यां, दृश्यादृश्यैः रक्षिभिश्च दृश्यैः स्वदेशस्थैः अदृश्यैः शत्रुविषये तत्सेवकच्छद्मभिः रक्षिपुरुषैश्च, परदूतान् रक्षयेच्च यथा परदूताः स्वदेशे मित्रसंग्रहादिकर्म न कुर्युस्तथा तच्चेष्टितानि यत्नेन गवेषयेच्चेत्यभिप्रायः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
षोडशोऽध्यायः दूतप्रणिधिः ॥

## १३. प्रक. राजपुत्ररक्षणम् ।

**रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः परेभ्यश्च[1] । पूर्वं दारेभ्यः पुत्रेभ्यश्च ।**

**दाररक्षणं निशान्तप्रणिधौ वक्ष्यामः ।**

**पुत्ररक्षणं — जन्मप्रभृति राजपुत्रान् रक्षेत् । कर्कटकसधर्माणो हि जनकभक्षाः राजपुत्राः ।**

**तेषामजातस्नेहे पितर्युपांशुदण्डः श्रेयानिति भारद्वाजः ।**

**नृशंसमदृष्टवधः क्षत्रविनाशश्चेति विशालाक्षः । तस्मादेकस्थानावरोधः श्रेयानिति ।**

**अहिभयमेतदिति पाराशराः । कुमारो हि विक्रमभयान्मां पिता**

---

**राजपुत्ररक्षण**मिति सूत्रम् । राजपुत्रेभ्यो राज्ञो रक्षणमभिधीयत इति सूत्रार्थः । पूर्वं चतुर्वर्णाश्रमतद्धर्माणां रक्षणं राज्ञा कर्तव्यमित्युक्तं, तस्य तु रक्षणं नोक्तम् । तदधुनोच्यते ।

राजा स्वबन्धुभ्यः परेभ्यश्च रक्षितः स्वप्रजास्तेभ्यो रक्षितुं प्रभवतीत्याह — **रक्षित** इत्यादि । बन्धुभ्यः केभ्यः, दारेभ्यः पुत्रेभ्यश्च, पूर्वमित्यनेन दारपुत्रा एव प्रथमं विपत्तिस्थानं राज्ञ इति दर्शयति ।

**दाररक्षण**मित्यादि । स्पष्टम् ।

**पुत्ररक्षण**मिति । उच्यत इति शेषः । **जन्मप्रभृती**त्यादि । कर्कटकसधर्माणः कुलीरसमानस्वभावाः । तमेव धर्मं जनकमारकत्वरूपमाह—**जनकभक्षा** इति । कर्कटका हि जनकं मारयन्त एव जायन्त इति प्रसिद्धिः, अत एव कुलिनं जनकमीरयन्ति नाशयन्तीति व्युत्पत्त्या ते कुलीरा उच्यन्ते ।

अत्र भारद्वाजमतमाह — **तेषा**मित्यादि । यावत् पितुः पुत्रेषु जातेषु स्नेहो नोदेति तावत् तेषां रहसि वधः प्रशस्ततर इत्यर्थः ।

निरपराधशिशुमारणमिदं महते पापाय भवति क्षत्रियकुलपरिक्षयाय चेति कृत्वा राजपुत्राणामन्तःपुरे क्वचिदवरोधनं श्रेय इति विशालाक्षो मन्यत इत्याह — **नृशंस**मित्यादि ।

एतत् सर्पसहवासवद् भयावहमिति पाराशरा मन्यन्त इत्याह — **अही**ति । भयस्थानत्वमेवोपपादयति — **कुमार** इत्यादि । विक्रमभयात्

---

१. 'छात्रेभ्य' ग. पाठः.

**रुणद्धीति ज्ञात्वा तमेवाङ्के कुर्यात्। तस्मादन्तपालदुर्गे वासः श्रेयानिति।**

**औरभ्रकं भयमेतदिति पिशुनः। प्रत्यापत्तेर्हि तदेव कारणं ज्ञात्वान्तपालसखः स्यात्। तस्मात् स्वविषयादपकृष्टे सामन्तदुर्गे वासः श्रेयानिति।**

**वत्सस्थानमेतदिति कौणपदन्तः। वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात्। तस्मान्मातृबन्धुषु वासः श्रेयानिति।**

**ध्वजस्थानमेतद् इति वातव्याधिः। तेन हि ध्वजेनादितिकौशिक-**

---

स्ववधभयात्। तमेवाङ्के कुर्यात् विक्रममेवायत्नप्राप्ये समीपप्रदेशे स्वगृहे कुर्यात्। अन्तपालदुर्गे राष्ट्रसीमपालकाधिष्ठिते दुर्गे। तत्रस्थेन दूरविप्रकर्षाद् विक्रमो गृह इव न सुकर इति भावः।

तावद्दूरस्थितादपि कुमाराद् भेतव्यमेवेति नारदो मन्यत इत्याह — **औरभ्रकमिति**। उरभ्रस्य मेषस्येदं कर्म औरभ्रम् औरभ्रमिव औरभ्रकम्। यथा मेषस्य पुरःस्थं प्रतिमेषं मूर्ध्ना जिघट्टयिषोर्दूरापसरणं पुरस्तादभिपतने शक्त्यतिशयाधायकत्वाद् भयस्थानं, तथा राजपुत्रस्य दूरान्तपालदुर्गावरोधन-मिदं पितृजिघांसोरनुबलाधानाय कल्पमानं भयस्थानं भवतीत्यभिप्रायः। भय-स्थानत्वमेव विशदयति— **प्रत्यापत्तेरित्यादि**। प्रत्यापत्तेः पितृद्रोहप्रकृत्यनिव-र्तनात्। तदेव कारणं विक्रमणशङ्कारूपम्। अन्तपालसखः अन्तपालसहायः। एतेनानुबलसम्पत्तिरुक्ता। **तस्मादित्यादि**। स्वविषयादपकृष्टे स्वजनपदाद् दूरस्थे। सामन्तदुर्गे विषयानन्तरस्य राज्ञो दुर्गे।

तदिदं सामन्तदुर्गलक्षणं कुमारवासस्थानं गोवत्सबन्धनस्थानतुल्यम्। तं हि कुमारं गोवत्सस्थानीयं व्याजं कृत्वा धेनुस्थानीयतत्पितृसकाशात् सामन्तः स्वाभीप्सितमर्थजातं क्षीरस्थानीयं पुनःपुनर्हरेदित्यतः कारणात् कुमारस्य मातृ-बान्धवेषु निवेशनं प्रशस्ततरं कौणपदन्तो मन्यत इत्याह — **वत्सेत्यादि**।

इदं मतमुद्धवो दूषयतीत्याह — **ध्वजेत्यादि**। एतद् ध्वजस्थानं ध्वज-सादृश्यम्, अर्थात् कुमारस्य। तद् विशदयति — **तेन हीति**। तेन ध्वजेन जीविकाचिह्नेन। **आदितिकौशिकवदिति**। नानादेवप्रतिकृतिप्रदर्शनेन भैक्ष-मर्जयन्ती या जीवति सा भिक्षुकी देवाविर्भावकत्वसादृश्याददितिरित्युच्यते कौशिको व्यालग्राही अदितिवत् कौशिकवच्च। यथाहि अदितयो देवप्रति-

**वदस्य मातृबान्धवा भिक्षेरन् । तस्माद् ग्राम्यधर्मेष्वेनमवसृजेयुः । सुखोपरुद्धा हि पुत्राः पितरं नाभिद्रुह्यन्तीति ।**

**जीवन्मरणमेतदिति कौटल्यः । काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत । तस्माद् ऋतुमत्यां महिष्याम् ऋत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः । आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रजने च वियतेत । प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात् । समर्थं तद्विदो विनयेयुः ।**

---

कृतीः कौशिकाश्च सर्पान् ध्वजान् कृत्वान्नादिकं भिक्षन्ते, तथा मातृबान्धवाः कुमारं निमित्तं कृत्वा स्वाभीष्टमर्थं याचेरन्निति वाक्यार्थः। **तस्मादित्यादि** तस्माद् एनं ग्राम्यधर्मेषु स्त्रीसेवादिषु अवसृजेत् यथेच्छसञ्चाराय । अवसर्गस्य फलमाह — **सुखेत्यादि** । सुखोपरुद्धाः वैषयिकानन्दयथेच्छानुभवसंविधानेनावरुद्धाः ।

स्वमतमाह — **जीवदिति** । एतद् जीवन्मरणम् इदं ग्राम्यधर्मावसर्जनं राजपुत्रस्य जीवत एव मरणं, शास्त्राद्यविनीतत्वाद् व्यसनोपहतबुद्धिसत्त्वशरीरत्वाच्च मरणतुल्यम् । यथा वम्रिचर्वितं दारु स्पृष्टमात्रमकृतभञ्जनयत्नमपि भग्नं भवति, तथा शास्त्रसदाचाराशिक्षितकुमारं राजकुलं परेण जिगीषितमात्रम् अप्रयुक्तविक्रममपि परिध्वस्तं भवतीत्याह — **काष्ठमिवेत्यादि** सर्वेष्वेषु पक्षेषु दोषदर्शनात् पुत्रगुणवत्त्वाय दृष्टादृष्टार्थाः प्रयत्ना गर्भाधानप्रकालात् प्रभृति आस्थेया इत्याह — **तस्मादित्यादि** । ऋतुमत्याम् ऋतुः आर्तवदर्शनादिषोडशनिशात्मकः कालो गर्भाधानयोग्यः तद्वत्याम् । ऐन्द्राबार्हस्पत्यं चरुं निर्वपेयुः इन्द्राबृहस्पतिद्वन्द्वदेवताकं हविः साधयेयुः हविर्द्रव्यं कामेष्टिविशेषं कुर्युरित्यर्थः । तत्रेन्द्रप्रीणनमैश्वर्यप्रतापाद्यर्थं बृहस्पतिप्रीणं बुद्धिविद्याद्यर्थं बोद्धव्यम् । आपन्नसत्त्वायां जातगर्भायाम् । कौमारभृत्यः शिशुवैद्यः । गर्भभर्मणि गर्भपोषणे । प्रजने प्रसवे । वियतेत विशिष्य यत्नं कुर्यात् । प्रजातायाः प्रसूतायाः । समर्थं विनयेयुः ग्रहणधारणपटुं विद्याः शिक्षयेयुः । के, तद्विदः शिक्षणज्ञाः ।

१. 'प्रसवने' ग. पाठः.

**सत्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत्—पितरि विक्रम्य राज्यं गृहाणेति। तदन्यः सत्री प्रतिषेधयेद् इत्याम्भीयाः।**

**महादोषमबुद्धबोधनमिति कौटल्यः। नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति, एवमयं नवबुद्धिर्यद्यदुच्येत तत्तच्छास्त्रोपदेशमिवाभिजानाति। तस्माद् धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च।**

**सत्रिणस्त्वेनं तव स्मः इति वदन्तः पालयेयुः। यौवनोत्सेकात् परस्त्रीषु मनः कुर्वाणम् आर्याव्यञ्जनाभिः स्त्रीभिरमेध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः। मद्यकामं योगपानेनोद्वेजयेयुः। द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः। मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः।**

विनीतस्य कुमारस्य पितृद्रोहनिवृत्त्युपायम् आम्भाचार्यानुयायिमतेनाह—**सत्रिणाम्** इत्यादि। मृगयाद्यूतमद्यस्त्रीभिः प्रलोभनसाधनैः। प्रलोभयेत् प्रलोभ्योपदिशेत्। अन्यः प्रलोभकादपरः।

तद् दूषयति—**महेति**। अबुद्धबोधनं महादोषम् अज्ञातस्य पितृद्रोहरूपस्य पापकर्मण उपदेशः परमानर्थः। **नवमिति**। हिशब्दो दृष्टान्ते। यथा नवं द्रव्यं मृद्भाण्डादिकं, येन येन अर्थजातेन जलघृतादिना, उपदिह्यते लिप्यते, तत्तद् आचूषति आपिबति अन्तर्गृह्णाति, एवम् अनेन प्रकारेण, नवबुद्धिः सदसद्व्यवहाराप्रविष्टबुद्धिः, अयं राजपुत्रः, यद्यद् उच्येत, तत्तत् तत् सर्वं, शास्त्रोपदेशमिव, अभिजानाति हृदये निवेशयति। **तस्मादिति**। तस्माद् यथोक्तात् कारणात्, अस्य धर्मम् अर्थं च उपदिशेत्, अधर्मं पितृद्रोहादिम्, अनर्थं मृगयाद्यूतपानादिकं च, नोपदिशेत्।

यदि स्वत एव राजपुत्रः परस्त्रीमद्यादिषु कामनां कुर्यात्, तदा तन्निवारणार्थं सत्रिणस्तमुपासीरन्नित्याह—**सत्रिण** इत्यादि। तव स्म इति वदन्तः त्वत्सेवका वयमिति विश्वासयन्तः। पालयेयुः परस्त्रीमद्यादिप्रवृत्तेर्वारयेयुरित्यर्थः। पालनप्रकारानाह—**यौवने**त्यादि। यौवनोत्सेकाद् यौवनमदात्। आर्याव्यञ्जनाभिः अभिजातस्त्रीवेषधारिणीभिः। अमेध्याभिः स्वभावादशुचिभिः स्त्रीभिः करणैः उद्वेजयेयुः जुगुप्सयेयुः, परस्त्रीरतादित्यार्थम्। योगपानेन विरसद्रव्ययुक्तेन मद्येन। कापटिकैः छलदेवनदक्षैः। प्रतिरोधकव्यञ्जनैः चौरवेषैः। विक्रमबुद्धिं विक्रमे विक्रम्य हनने बुद्धिर्यस्य तम्। तथेत्यनु-

१. 'त्याजीम्भी', २. 'श्चैनं', ३. 'रसेव्याभि' ग. पाठः.

**पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेदयेयुः — अप्रार्थनीयो राजा, विपन्ने घातः, सम्पन्ने नरकपातः, संक्रोशः प्रजाभिरेकलोष्टवधश्चेति ।**

**विरागं प्रियमेकपुत्रं वा बध्नीयात् । बहुपुत्रः प्रत्यन्तमन्यविषयं वा प्रेषयेद् यत्र गर्भः पण्यं डिम्बो वा न भवेत् । आत्मसम्पन्नं सैनापत्ये यौवराज्ये वा स्थापयेत् ।**

**बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः । शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान् । उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः । अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः ।**

---

प्रविश्य भेदयेयुः तथा कुर्म इति वाङ्मात्रेण तच्छन्दानुवृत्त्या ततो निवर्तयेयुः । अप्रार्थनीय इत्यादिर्निवर्तनार्थम् उपदेशः । राजा, अप्रार्थनीयः अर्थयितुम् एषितुं योग्यः अर्थनीय एष्टव्यः तद्विपरीतः प्रार्थनीयः अनेष्टव्यः द्वेष्य इति यावत्, प्रशब्दस्येह प्रस्मरतीत्यादाविव धात्वर्थविपरीतद्योतकत्वात्, प्रार्थनीयो न भवतीत्यप्रार्थनीयः अद्वेष्य इत्यर्थः । विपन्ने घातः पितृवधसमुद्यमे विफलिते सति तव वधो भवेत्, सम्पन्ने नरकपातः फलिते सति पितृवधपातकिनस्ते नरके पतनं, संक्रोशः लोकनिन्दा, प्रजाभिः एकलोष्टवधश्च प्रजाभिः समुदिताभिः कर्त्रीभिः एकैकमृत्खण्डप्रक्षेपेण घातश्च तव भवेत् ।

एवं कृतेऽपि यः पितरि निःस्नेह एव पितुः प्रिय एकश्च पुत्रो भवेत्, तदा तं बध्नीयादित्याह — **विरागमित्यादि** । बहुपुत्रश्चेद् राजा यथोक्तं पुत्रं कर्शयेदित्यभिप्रायेणाह — **बहुपुत्र इत्यादि** । प्रत्यन्तं म्लेच्छदेशम् । अन्यविषयं वा अन्यदेशं वा । यत्र गर्भः पण्यं डिम्बो वा न भवेत् यस्मिन् देशे गर्भः अन्नं राजपुत्रोचितं, पण्यं तादृशं वसनादिकमापणलभ्यं भोग्यवस्तु, डिम्बो राजपुत्रनिमित्तः प्रकृतीनां विप्लवश्च, न स्यात् । गर्भ इत्यस्य स्थाने गर्व इत्यपि पाठः । तदा त्वर्थः स्फुट एव । गुणसम्पन्नपुत्रविषये त्वाह — **आत्मसम्पन्नमित्यादि** ।

पुत्रं विभजते — **बुद्धिमानित्यादि** । पुत्रविशेषाः पुत्रभेदाः । उपदिश्यमानधर्मार्थज्ञानानुष्ठाननिष्ठो बुद्धिमान् । तज्ज्ञानमात्रवांस्तदनुष्ठानविमुख आहार्यबुद्धिः, नित्यप्रमादी धर्मार्थद्वेषणशीलश्च दुर्बुद्धिरिति त्रयाणां लक्षणमाह — **शिष्यमाण इत्यादि** ।

**स यद्येकपुत्रः पुत्रोत्पत्तावस्य प्रयतेत । पुत्रिकापुत्रानुत्पादयेद् वा । वृद्धस्तु व्याधितो वा राजा मातृबन्धुकुल्यगुणवत्सामन्तानामन्यतमेन क्षेत्रे बीजमुत्पादयेत् । न चैकपुत्रमविनीतं राज्ये स्थापयेत् ।**

**बहूनामेकसंरोधः पिता पुत्रहितो भवेत् ।**
**अन्यत्रापद ऐश्वर्यं ज्येष्ठभागि तु पूज्यते ॥**
**कुलस्य वा भवेद् राज्यं कुलसङ्घो हि दुर्जयः ।**
**अराजव्यसनाबाधः शश्वदावसति क्षितिम् ॥**

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे सप्तदशोऽध्यायः राजपुत्ररक्षणम् ॥

---

**स** इति । स दुर्बुद्धिः, एकपुत्रो यदि एक एव राज्ञः पुत्रश्चेत्, अस्य दुर्बुद्धेः, पुत्रोत्पत्तौ पुत्रस्य राज्यार्हस्योत्पत्तौ प्रयतेत विशेषेण यत्नं कुर्यात् । अथवा पुत्रिकापुत्रान् पुत्रिकायाः 'अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति' इति परिभाषापूर्वं वराय दत्तायाः सुतायाः पुत्रान्, उत्पादयेद् राज्यार्थम् । अदुहितृको वृद्धभावाद् व्याधेर्वा गर्भाधानाक्षमश्चेद् राजा, तदा मातृबन्धोः स्वकुलजातस्य गुणवत्सामन्तस्य वा नियोगेन स्वमहिष्यां बीजमुत्पादयेदित्याह — **वृद्धस्त्वि**त्यादि । सर्वथा तु अशिक्षितमेकं पुत्रं राज्ये न निवेशयेदित्याह — **न चे**त्यादि ।

**बहूनामि**ति । बहूनां पुत्राणां मध्ये, एकसंरोधः एकस्य दुर्बुद्धेः संरोधः प्रत्यन्तादिष्ववरोधः, कर्तव्य इति शेषः । पिता, आपदोऽन्यत्र अनापदि पुत्रहितः पुत्रानुकूलवृत्तिः भवेत् । पुत्रेषु बहुषु पितृप्रियेषु विद्यमानेषु कस्य राज्यभाक्त्वमित्यत्राह — ऐश्वर्यं राजत्वं, ज्येष्ठभागि तु ज्येष्ठपुत्राश्रयमेव, पूज्यते प्रशस्यते ॥

पक्षान्तरमाह — **कुलस्ये**ति । अथवा राज्यं कुलस्य बहुपुत्रसङ्घस्य भवेत् बहुपुत्रसङ्घनेतृकं कार्यमित्यर्थः । तथा करणे गुणमाह — **कुलसङ्घः** कुलात्मको राज्यनेता सङ्घः, दुर्जयः जेतुमशक्यः शत्रुणा भवति । गुणान्तरमाह — **अराजव्यसनाबाधः** राजव्यसनदोषनिमित्त आबाधो जनपीडा राजव्यसनाबाधः तस्याभावः, शश्वत् सर्वदा क्षितिम् आवसति भूमिमधितिष्ठति राज्येऽनुवर्तेत इत्यर्थः । नेतृसङ्घस्यावयव एकस्मिन् व्यसनविनष्टेऽप्यन्यैः सम्यक् प्रजापरिपालननिर्वर्तनादिति भावः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे सप्तदशोऽध्यायः राजपुत्ररक्षणम् ॥

**१४,१५. प्रक॰ अवरुद्धवृत्तम्, अवरुद्धे च वृत्तिः।**

**राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत, अन्यत्र प्राणाबाधकप्रकृतिकोपपातकेभ्यः। पुण्यकर्मणि नियुक्तः पुरुषमधिष्ठातारं याचेत। पुरुषाधिष्ठितश्च सविशेषमादेशमनुतिष्ठेत्। अभिरूपं च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत्।**

**तथाऽप्यतुष्यन्तमन्यस्मिन् पुत्रे दारेषु वा स्निह्यन्तमरण्याय आपृच्छेत। बन्धवधभयाद् वा यः सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तमाश्रयेत**

---

अवरुद्धवृत्तमिति सूत्रम्। अवरुद्धो नाम राज्ञा स्वसन्निधेर्विवासितः तेन राज्ञि कथं व्यवहर्तव्यमित्येतदिहोच्यत इति सूत्रार्थः। आत्मसम्पन्नः राजपुत्रः सैनापत्यादौ स्थाप्य इत्युक्तं प्राक्। तत्रात्मसम्पन्नेष्वनेकेष्वेकश्चेत् सेनापतिर्युवराजो वा क्रियेत, तदान्यो राजपुत्रो विजिगीषुः सम्पन्न इति तस्य वृत्तमभिधानीयमिति सम्बन्धः।

अवरुद्धो राजपुत्रः क्लेशनिर्वर्त्यदेहयात्रः स्वाननुरूपे कर्मणि पित्रा चोदितो यथापितृनियोगं कर्मानुतिष्ठेत्, तच्चेत् कर्म स्वप्राणसंशयकरं प्रकृतिकोपपातकजनकं वा न भवेदित्याह--**राजपुत्र** इत्यादि। अनुष्ठानप्रकारमाह--**पुण्येत्यादि**। अधिष्ठातारं पुरुषं याचेत कर्मनेतारं कमपि स्वाधश्वरपुरुषं पितृसकाशाद् याचित्वा लभेत। आदेशं पितृनियोगम्। सविशेषमनुतिष्ठेत् विशेषो गुणवत्ता तद्युक्तं यथा भवति तथा चरेत्। अभिरूपं हृद्यं प्रशस्तम् कर्मफलं स्वकर्मोत्पादितं धान्यादिकम्। औपायनिकं लाभं च कर्षकादिभिः उपायनात्मना लब्धं द्रव्यं च। पितुरुपनाययेत् पितुः सकाशं प्रापयेत् तत्पतोषार्थं, नतु स्वयमुपयुञ्जीत।

**तथापीत्यादि**। तथापि अतुष्यन्तं कर्मफललाभोपनायनेनाप्यात्मतुष्टिमकुर्वन्तं पितरम्। दारेषु स्वमातृव्यतिरिक्तायां पत्न्याम्। अरण्याय आपृच्छेत 'तपसे वनं गन्तुं मेऽनुज्ञां देहीं'त्यर्थयेत। यथोक्तापृच्छादैन्यप्रकाशनेऽप्यार्जवमप्रतिपद्यमाने पितरि आत्मबन्धनहननशङ्कायां वा जातायां गत्यन्तराभावादभिद्रोग्धुं गुणवत्सामन्तसाहाय्यसम्पादने वियतेतेत्याह -**बन्धवधभयादित्यादि**। अविसंवादकः अविप्रलम्भकः। अभिपन्नानां प्रा

**तत्रस्थः कोशदण्डसम्पन्नः प्रवीरपुरुषकन्यासम्बन्धमटवीसम्बन्धं कृत्यपक्षोपग्रहं वा कुर्यात्।**

**एकचरः सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तानाजीवेत्। पाषण्डसङ्घद्रव्यमश्रोत्रियभोग्यं देशद्रव्यमाढ्यविधवाद्रव्यं वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेनातिसन्धायावहरेत्। पारग्रामिकं वा योगमातिष्ठेत्। मातुः परिजनोपग्रहेण वा चेष्टेत।**

---

ग्रहीता मानयिता च शरणागतानां स्वीकर्ता सत्कर्ता च। तं सामन्तमाश्रित्य तिष्ठन् कोशदण्डाभ्यां स्वार्जिताभ्यां युक्तो भूत्वा प्रकृष्टवीरपुरुषकन्यकायाः परिणयं स्वपितृजनपदाटविकसख्यं स्वपितृकृत्यवर्गस्वीकरणं च सहायोपचयार्थं कुर्यादित्याह— **तत्रस्थ** इत्यादि। अटवीसम्बन्धमित्यटवीशब्दस्तात्स्थ्यादाटविके वर्तते।

असहायविषय आह — **एकचर** इति। एकचरः एकाकी अलब्धकोशदण्डादिसहायः, सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तान् सुवर्णपाकं पुटपाकेन लोहादेः सुवर्णत्वापादनकर्म रसतन्त्रप्रयोगमिति यावत्, मणिरागहेमरूप्यपण्यानि वज्रवैदूर्यमौक्तिकादिर्मणिः लाक्षादिरञ्जनद्रव्यं रागः हेम स्वर्णं रूप्यं रजतम् इत्येतद्रूपाणि पण्यानि विक्रेयपदार्थान् आकरकर्मान्तं रत्नादिखनिव्यापारं च, आजीवेत् उपजीवेत्। एष कोशार्जनेऽभ्युपायः। उपायान्तरमाह — **पाषण्डेति**। पाषण्डसङ्घद्रव्यं पाषण्डैः स्वसङ्घार्थं सङ्गृह्य स्थापितं धनम्, अश्रोत्रियभोग्यं देशद्रव्यं छान्दसब्राह्मणभोग्यातिरिक्तं देश्यजनसमुदायद्रव्यम्। देवद्रव्यमित्यपि पाठः। आढ्यविधवाद्रव्यं वा आढ्याः समृद्धधना या विधवास्तासां द्रव्यं वा, गूढं द्रव्यापजिहीर्षागुप्तिपूर्वं, अनुप्रविश्य अनुकूलाचरणेन वशयित्वा अर्थात् पाषण्डादीन् अवहरेत्। किञ्च सार्थयानपात्राणि सार्थस्य वणिक्सङ्घस्य यानपात्राणि पोतान् पण्ययुक्तान्, मदनरसयोगेन मदकररसदानोपायेन, अतिसन्धाय वञ्चयित्वा अर्थाद् वणिक्सङ्घम्, अवहरेत्। **पारग्रामिकमिति**। अथवा पारग्रामिकं योगं 'विजिगीषुः परग्राममवाप्तुकाम' इत्यादिना दुर्गलम्भोपायाधिकरणे वक्ष्यमाणम् उपायम्, आतिष्ठेत् आद्रियेत। अथवा मातुः, परिजनोपग्रहेण सेवकजनानुकूलनेन,

---

१. 'को वा' ग, पाठः.

कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डच्छद्मभिर्वा नष्टरूपस्त-द्व्यञ्जनसखः छिद्रे प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयात् — अह-मसौ कुमारः, सहभोग्यमिदं राज्यमेको नार्हति भोक्तुं, तत्र ये काम-यन्ते भर्तुं तानहं द्विगुणेन भक्तवेतनेनोपस्थास्ये इति। इत्यवरुद्धवृत्तम् ॥

अवरुद्धं तु मुख्यपुत्रापसर्पाः प्रतिपाद्यानयेयुः, माता वा प्रति-गृहीता। त्यक्तं गूढपुरुषाः शस्त्ररसाभ्यां हन्युः। अत्यक्तं तुल्यशी-लाभिः स्त्रीभिः पानेन मृगयया वा प्रसज्ज्य रात्रावुपगृह्यानयेयुः।

---

चेष्टेत वियतेत स्ववृद्ध्यर्थम्। अथवा, कारुशिल्पिकुशीलवचिकित्सकवाग्जी-वनपाषण्डच्छद्मभिः कारवः तक्षायस्काराः शिल्पिनः चित्रकारादयः कुशी-लवा गायनाः चिकित्सका वैद्याः वाग्जीवनाः पुरावृत्तकथनोपजीविनः पाषण्डाः क्षपणकबौद्धभिक्षुप्रभृतयो वेदबाह्याः तद्वेषैः सह, नष्टरूपः छन्नस्वरूपः, तद्व्य-ञ्जनसखः कार्वादिवेषपुरुषतुल्यः, राज्ञः पितुः, छिद्रे अपकारस्थाने, प्रविश्य, शस्त्ररसाभ्यां प्रहृत्य राजानं हत्वा, ब्रूयाद्, अर्थात् सचिवादीन्। अह-मित्यादिर्वचनप्रकारः। कुमारः राजपुत्रः। सहभोग्यं ससहायनिर्वेश्यं ससहाय-शासनीयं वा। भर्तुम् अमात्यादिपदेष्वधिकर्तुम्। तान् भर्तुकामान्। द्विगुणेन मत्पितृदत्ताद् द्विरावृत्तेन। उपस्थास्ये पूजयिष्यामि। इत्यवरुद्धवृत्तं वर्णित-मिति शेषः ॥

अवरुद्धे च वृत्तिरिति सूत्रम्। अवरुद्धं पुत्रादिं प्रति विजिगीषोर्वृत्त-मिति सूत्रार्थः। विजिगीषोरवरुद्धावस्थायां वृत्तमुक्तम्, अवरोद्धृवस्थायां वृत्त-मधुनोच्यते।

अवरुद्धमिति। मुख्यपुत्रापसर्पाः मुख्यानाममात्यादीनां ये पुत्राः तद्रूपा अपसर्पाः चाराः, प्रतिगृही[illegible] माता वा राजपूजिता स्वमाता वा, अव-रुद्धं राजपुत्रं, प्रतिपाद्य 'पिता ते यौवराज्यं दद्यात् त्वं चेत् तदनुकूलवृत्तिरि'ति भाषया पितृहितवृत्तिमभ्युपगमय्य, आनयेयुः पितुरन्तिकम्। कथञ्चिदपि विधेयतानासादनात् पित्रा परित्यक्तं राजपुत्रम् आयुधविषप्रयोगाभ्यां गूढपुरुषा हन्युः, अविधेयत्वेऽप्येकपुत्रत्वादपत्यस्नेहाद् वा अपरित्यक्तं तं समानस्वभा-वाभिः स्त्रीभिः मद्येन खेटनेन वा प्रसक्तिं कारयित्वा बद्ध्वा रात्रौ राजान्तिकं प्रापयेयुरित्याह,— त्यक्तमित्यादि।

उपस्थितं च राज्येन मदूर्ध्वमिति सान्त्वयेत् ।
एकस्थमथ संरुन्ध्यात् पुत्रवान् वा प्रवासयेत् ॥

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
अष्टादशोऽध्यायः अवरुद्धवृत्तमवरुद्धे च वृत्तिः ॥

**उपस्थितमिति** । उपस्थितं तथा प्राप्तम् अवरुद्धम् अर्थाद् धार्मिकं, राज्येन मदूर्ध्वमिति सान्त्वयेत् राज्यमिदं मदुत्तरकाले त्वदीयं भविष्यतीति राज्येन निमित्तेनानुनयेत् । अथ एकस्थम् अभ्रातृकं पुत्रम् अर्थादधार्मिकं सन्तं, संरुन्ध्यात् कारागृहे निवेशयेत् । पुत्रवान् वा प्रवासयेत् बहुपुत्रसद्भाव-पक्षे अधार्मिकं पुत्रं हन्यादित्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
अष्टादशोऽध्यायः अवरुद्धवृत्तम् अवरुद्धे च वृत्तिः ॥

## १६. प्रक. राजप्रणिधिः।

**राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्याः। प्रमाद्यन्तमनुप्रमाद्यन्ति। कर्माणि चास्य भक्षयन्ति। द्विषद्भिश्चातिसन्धीयते। तस्मादुत्थानमात्मनः कुर्वीत। नालिकाभिरहरष्टधा रात्रिं च विभजेत्। छायाप्रमाणेन वा त्रिपौरुषी पौरुषी चतुरङ्गुला नच्छाया मध्याह्न इति चत्वारः पूर्वे दिवसस्याष्टभागाः। तैः पश्चिमा व्याख्याताः।**

**तत्र पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात्। द्वितीये पौरजानपदानां कार्याणि पश्येत्। तृतीये स्नानभोजनं सेवेत, स्वाध्यायं च कुर्वीत। चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत। पञ्चमे**

---

**राजप्रणिधिरिति** सूत्रम्। राज्ञः प्रणिधिः प्रणिधानं व्यापार उच्यत इति सूत्रार्थः। इन्द्रियजयप्रकरणे 'उत्थानेन योगक्षेमसाधनम्' इत्युक्तम्, उत्थानस्वरूपं त्वनुक्तमिहाभिधीयते।

राजा स्वकर्मणि व्याप्रियते चेद्, अमात्यसमाहर्तृसन्निधातृप्रभृतयो भृत्याः स्वस्वकर्मसु व्याप्रियन्ते, स चेदालस्यान्न व्याप्रियते तेऽपि न व्याप्रियन्ते, राज्ञः कार्याणि च नाशयन्ति, तथाभूतोऽसौ राजा शत्रुभिर्वञ्च्यते च। तस्मादात्मनो व्यापारं राजानुतिष्ठेदित्याह— **राजानमित्यादि**। अनुष्ठेयानां कर्मणां कालविभागनियमं वक्तुमाह — **नालिकाभिरिति**। अहश्च रात्रिं च, नालिकाभिरष्टधा विभजेत् नालिका घटिका षष्टिविनाडिकात्मिका नालिकाप्रमाणेनाह्नो रात्रेश्च प्रत्येकमष्टौ भागान् कल्पयेत्। तत्रैकोऽष्टमभागः पादोननालिकाचतुष्टयात्मको मुहूर्ताद्वयः सुप्रसिद्धः। दिवसस्याष्टावष्टमभागान् दर्शयति — **छायेत्यादि**। त्रिपौरुषी पुरुषत्रयपरिमाणा छाया, पौरुषी एकपुरुषपरिमाणा, चतुरङ्गुला अङ्गुलचतुष्टयपरिमाणा चेति त्रयः, मध्याह्नश्चतुर्थः, इति छायाप्रमाणेन एवम्प्रकारेण पुरुषच्छायामानेन, दिवसस्य, पूर्वे अष्टभागाः आदिमा अष्टमभागाः, चत्वारो भवन्ति। तैः उक्तैः पूर्वैरष्टभागैः, पश्चिमाः व्याख्याताः उत्तरा अष्टभागा उक्तप्रायाः, चतुरङ्गुला पौरुषी त्रिपौरुषी दिनान्त इत्येवं चत्वार इत्यूहितुं शक्या इत्यर्थः।

दिवसस्याष्टभागेष्वष्टसु क्रमेणानुष्ठेयानि कर्माणि दर्शयति—**तत्र पूर्वे इत्यादि**। रक्षाविधानं राज्यनुष्ठितम्। आयव्ययौ गताहोरात्रवृत्तौ। पश्येत् विमृशेत्। स्नानभोजनं स्नानं च भोजनं च। स्वाध्यायं वेदाध्ययनम्। हिर-

मन्त्रिपरिषदा पत्रसंप्रेषणेन मन्त्रयेत, चारगुह्यबोधनीयानि च बुध्येत। षष्ठे स्वैरविहारं मन्त्रं वा सेवेत । सप्तमे हस्त्यश्वरथायुधीयान् पश्येत्। अष्टमे सेनापतिसखो विक्रमं चिन्तयेत्। प्रतिष्ठितेऽहनि सन्ध्यामुपासीत।

प्रथमे रात्रिभागे गूढपुरुषान् पश्येत् । द्वितीये स्नानभोजनं कुर्वीत स्वाध्यायं च । तृतीये तूर्यघोषेण संविष्टः चतुर्थपञ्चमौ शयीत। षष्ठे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत् । सप्तमे मन्त्रमध्यासीत, गूढपुरुषांश्च प्रेषयेत् । अष्टमे ऋत्विगाचार्यपुरोहितसखः स्वस्त्ययनानि प्रतिगृह्णीयात्, चिकित्सकमाहानसिकमौहूर्तिकांश्च पश्येत् । सवत्सां धेनुं वृषभं च प्रदक्षिणीकृत्योपस्थानं गच्छेत् ।

आत्मबलानुकूल्येन वा निशाहर्भागान् प्रतिविभज्य कार्याणि सेवेत।

---

ण्यप्रतिग्रहं गतदिवसोत्थितधनस्वीकारम् । अध्यक्षान् कुर्वीत कार्यविशेषेषु नियुञ्जीत । पत्रसम्प्रेषणेन मन्त्रयेत लेख्यद्वारकसंवादेन कार्यमालोचयेत् । चारगुह्यबोधनीयानि बुध्येत चारेभ्यो रहसि उपदेश्यानि कार्याणि अवगच्छेत्। स्वैरविहारं स्वच्छन्दावस्थानं विश्रमार्थम् । हस्त्यश्वरथायुधीयान् हस्त्यादियुक्तान् पदातीन् । सेनापतिसखः सेनापतिसमेतः । प्रतिष्ठिते अवसिते ।

रात्रिभागेष्वनुष्ठेयानि कर्माण्याह — **प्रथम** इत्यादि । तृतीये तूर्यघोषेण संविष्टः तृतीये रात्रिभागे गीतवाद्यश्रवणसुखमनुभवन्नेव शयितः। चतुर्थपञ्चमौ शयीत चतुर्थे पञ्चमे च रात्रिभागे कृत्स्ने स्वप्यात् । शास्त्रम् अर्थशास्त्रम् । इतिकर्तव्यतां कालोचितकार्यपरिपाटीम् । प्रेषयेद् यथाविषयं प्रणिदध्यात् । ऋत्विगाचार्यपुरोहितसखः ऋत्विग् याजकः आचार्यः विद्योपदेष्टा पुरोहितः मन्त्रिपुरोहितोत्पत्तिप्रकरणोपवर्णितगुणः एषां सखा । स्वस्त्ययनानि माङ्गलिकमन्त्रपाठपूर्वाण्याशीर्वचनानि । **चिकित्सकमाहानसिकमौहूर्तिकांश्च पश्येदि**ति । चिकित्सकदर्शनं देहावस्थापरिज्ञानार्थम् महानसाधिकृतदर्शनं कल्पनीयेष्वाहारकथनार्थम् मौहूर्तिकदर्शनं तदहर्ग्रहशुभाशुभचिन्तनार्थम्। उपस्थानम् आस्थानमण्डपम् ।

त इमे निशाहर्भागा औत्सर्गिकाः, वैशेषिका अपि तु कार्यद्रष्ट्रा कल्प्यमाना न दुष्यन्तीत्याह — **आत्मे**त्यादि । वा अथवा । आत्मबलानुकूल्येन आत्मनो यद् बलं कार्यानुष्ठानशक्तिस्तदानुगुण्येन ।

उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत् । दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते । तेन प्रकृतिकोपमरिवशं वा गच्छेत् । तस्माद् देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्, कार्यगौरवादात्ययिकवशेन वा ।

सर्वमात्ययिकं कार्यं शृणुयान्नातिपातयेत् ।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वा विजायते ॥
अग्न्यगारगतः कार्यं पश्येद् वैद्यतपस्विनाम् ।
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च ॥
तपस्विनां तु कार्याणि त्रैविद्यैः सह कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥

---

उपस्थानेत्यादि । अद्वारासङ्गं कारयेत् द्वारे आसङ्गः सक्तिर्निरोध इति यावत् तदभावं कारयेत्, सुलभदर्शनो भवेदित्यभिप्रायः । दुर्लभदर्शनत्वे दोषमाह — दुर्दर्श इत्यादि । कार्याकार्यविपर्यासं कार्याकार्ययोरकरणं व्युत्क्रमकरणं वा । आसन्नैः अन्तिकसेवकैः । तेन कार्याकार्यविपर्यासनेन । प्रकृतिकोपम् अमात्यादिरोषम् । अरिवशं शत्रुगोचरम् । कार्यदर्शने क्रममाह— तस्माद् देवताश्रमेत्यादि । अत्राश्रमशब्दो मुन्युपलक्षकः । व्यसनिशब्दो दुःखाभिभूतपरः । शेषं स्पष्टम् । कार्यगौरवाद् आत्ययिकवशेन वा कार्याणि पश्येत् कार्यस्य महत्त्वापेक्षया वा अमहत्त्वेऽप्यतिपातित्वापेक्षया वा कार्याणि चिन्तयेत्, क्रमं यथोक्तमनादृत्यापीत्यभिप्रायः ।

सर्वमिति । सर्वं गुरु लघु च, आत्ययिकं कार्यं, शृणुयात् श्रुत्वानुतिष्ठेत्, नातिपातयेत् नातिक्रामयेत् । अतिक्रान्तम् अतिपातितकालं किमपि सद्यस्सुकरं कार्यं, कृच्छ्रसाध्यं असाध्यं वा भवति, कालान्तरे ॥

अग्न्यगारेत्यादि । अग्न्यगारगतः अग्निहोत्रशालागतः । वैद्यतपस्विनां विदुषां तापसानां च ॥

तपस्विनामित्यादि । त्रैविद्यैः सह त्रयीविद्याविद्भिः साकं, त्रैविद्यसाहित्यवचनं कार्यनिर्णये प्रत्ययार्थम् । मायायोगविदां मायाप्रयोगाभिज्ञानाम् । न स्वयम् एकाकी सन् न कारयेत्, कुतः, कोपकारणात् कोपान्निमित्तात् ॥

राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् ।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम् ॥
प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम् ॥
तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम् ।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥
अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च ।
प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम् ॥

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
एकोनविंशोऽध्यायः राजप्रणिधिः ॥

---

**राज्ञ** इति । उत्थानम् उद्योगः, यज्ञः क्रत्वनुष्ठानं, कार्यानुशासनं व्यवहारनिर्णयः, दक्षिणा दानं, वृत्तिसाम्यं शत्रौ मित्रे च गुणदोषापेक्षया तुल्यं व्यवहरणं, दीक्षितस्य अभिषेचनम् अवभृथनिर्वर्तनं च राज्ञो व्रतम् ॥

**प्रजासुख** इति । प्रजासुखे सति, राज्ञः सुखम्, अस्ति । प्रजानां हिते च सति राज्ञो हितम्, अस्ति । राज्ञः आत्मप्रियं हितं न भवति, किं तर्हि, प्रजानां प्रियं तु हितं प्रजानां प्रियमेव हितं भवति ॥

**तस्मादि**ति । तस्माद् उक्तात् कारणात्, राजा नित्योत्थितः नित्योद्योगी सन्, अर्थानुशासनम् अर्थव्यवहारं, कुर्यात् । उत्थानम् उद्यमः, अर्थस्य मूलं सिद्ध्युपायः, विपर्ययः अनुत्थानम् अनर्थस्य मूलम् ॥

**अनुत्थान** इति । अनुत्थाने आलस्यादुद्योगाकरणे, प्राप्तस्य पूर्वसिद्धस्य, अनागतस्य सेत्स्यतश्च अर्थस्य, नाशः, ध्रुवः निश्चितः । उत्थानात्, फलं प्राप्यते, अर्थात् सद्यः, अर्थसम्पदं लभते च अर्थस्य प्राप्तस्य रक्षणसिद्ध्या अप्राप्तस्य प्राप्तिसिद्ध्या च समृद्धिं प्राप्नोति च । उत्थानस्यैवं त्रैकाल्यहितत्वं समर्थितम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
एकोनविंशोऽध्यायः राजप्रणिधिः ॥

१७. प्रक. निशान्तप्रणिधिः ।

**वास्तुकप्रशस्ते देशे सप्राकारपरिखाद्वारमनेककक्ष्यापरिगतमन्तः-पुरं कारयेत् ।**

**कोशगृहविधानेन वा मध्ये वासगृहं, गूढभित्तिसञ्चारं मोहनगृहं तन्मध्ये वा वासगृहं, भूमिगृहं वा आसन्नकाष्ठचैत्यदेवतापिधानद्वार-मनेकसुरुङ्गासञ्चारम् । प्रासादं वा गूढभित्तिसोपानं, सुषिरस्तम्भप्रवे-**

**निशान्तप्रणिधिरिति** सूत्रम् । निशान्तं राजभवनं तस्य प्रणिधिः, तत्सम्बद्धमनुष्ठानमुच्यत इति सूत्रार्थः । 'दाररक्षणं निशान्तप्रणिधौ वक्ष्याम इत्युक्तं राजपुत्ररक्षणे । तदिदानीमभिधीयते ।

**वास्तुकेत्यादि** । वास्तुकप्रशस्ते वास्तुविद्याभिज्ञश्लाघिते । सप्राकार-परिखाद्वारं प्राकारः सालः परिखा दुर्गवेष्टनखातिका द्वाराणि अपवरकाणि एतैर्युक्तम् । अनेककक्ष्यापरिगतम् अनेकाभिः कक्ष्याभिः प्रकोष्ठकैः परिगतम् अन्तःपुरं कारयेत् ।

**कोशेति** । कोशगृहविधानेन कोशगृहनिर्माणविधया सन्निधातृनिचय-कर्मप्रकरणे वक्ष्यमाणया, मध्ये अन्तःपुरमध्ये, स्वस्य वासगृहं गर्भागारं कार-येद्, राजा । गूढभित्तिसञ्चारं गूढः अनन्यलक्ष्यः भित्तिसञ्चारः भित्त्यन्त-रस्थो गतागतमार्गो यस्य तथाभूतं, मोहनगृहं मार्गव्यामोहकरत्वाद् मोहन-संज्ञं किमपि वृत्ताकारं गृहं, कारयेत् । तन्मध्ये वा तथाकारितस्य मोहनगृ-हस्य मध्ये वा वासगृहं कारयेत् । भूमिगृहं वा कारयेद् भूमिं खात्वा तदन्तः कृतसन्निवेशं गृहं भूमिगृहं तच्च कारयेद्, अर्थान्मोहनगृहस्य मध्ये । **कीदृशं** भूमिगृहम्, आसन्नकाष्ठचैत्यदेवतापिधानद्वारम् आसन्नकाष्ठे **चैत्ये निकटदि-**ग्वर्तिनि देवालये या देवता प्रसिद्धा दुर्गा तदन्या वा रौद्री तद्रूपं पिधानम् उत्कीर्णतद्देवताप्रतिमाङ्कं दारुलोहादिमयमाच्छादनं यस्य तत् तथाभूतं द्वारं **यस्य** तादृशम् । देवतापिहितद्वारे तस्मिन् गतागतमार्गसंविधानमाह — **अने-कसुरुङ्गासञ्चारम्** अनेकाः सुरुङ्गासञ्चाराः तिर्यग्भूखातात्मकाः **सञ्चरणमार्गा** **यस्य** तत् तादृशम् । **किञ्च प्रासादं, गूढभित्तिसोपानं** गूढानि अन्याविदितानि **भित्तिसोपानानि** भित्त्यन्तरगतानि **आरोहणानि** यस्य तं तथाभूतम्, **अथवा** **सुषिरस्तम्भप्रवेशापसारं** वा अन्तः सुषिरवता स्तम्भेन स्तम्भमार्गेण **प्रवेशः**

**शापसारं वा। वासगृहं यन्त्रबद्धतलावपातं कारयेद् आपत्प्रतीकारार्थम्। आपदि वा कारयेत्। अतोऽन्यथा वा विकल्पयेत् सहाध्यायिभयात्।**

**मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति, न चात्रान्योऽग्निर्ज्वलति, वैद्युतेन भस्मना मृत्संयुक्तेन करकवारिणावलिप्तं च।**

**जीवन्तीश्वेतामुष्ककपुष्पवन्दाकाभिरक्षीवे जातस्याश्वत्थस्य प्रतानेन वा गुप्तं सर्पा विषाणि वा न प्रसहन्ते। मार्जारमयूरनकुलपृषतो-**

---

अपसारो निर्गमश्च यस्मिंस्तं तथाभूतं वा कारयेत्। प्रकारान्तरमाह—**वासगृहमिति**। वासगृहं, यन्त्रबद्धतलावपातं यन्त्रबद्धं तलावपातं च यन्त्रेणोपरिभूमौ धारितं यन्त्रस्रंसने सत्यधोदेशनिपातुकं च कारयेत्। किमर्थम्, आपत्प्रतीकारार्थं शत्रुभयप्रतिक्रियार्थम् अधःस्थितशत्रुमारणार्थमित्यर्थः। आपदि वा कारयेत् पूर्वमतादृशमप्यापत्समये वा तादृशं कारयेत्। उक्तं वासगृहकाप्यप्रकारं शत्रुरपि तुल्यशास्त्रवेत्ता विज्ञाय चेष्टेतेति यदि शङ्का स्यात्, तदा प्रकारान्तरेण स्वबुद्धिप्रतिभातेन वासगृहं विकल्पयेदित्याह — **अतोऽन्यथा वेत्यादि**।

निर्मितस्य निशान्तस्याग्निभयपरिहारोपायमाह— **मानुषेणेति**। मानुषेणाग्निना शत्रुनिहतस्य वा शूलारोपणमारितस्य वा मनुष्यस्यास्थ्नि कल्माषवेणुना मथनादुत्थितेनाग्निना, त्रिः अपसव्यं परिगतं त्रीन् वारान् वामावर्तेन परीतं, परिगमनस्य अथर्वोक्तमन्त्रोच्चारणपूर्वकत्वं तु साम्प्रदायिकमर्थगम्यम्। अन्तःपुरम् अन्योऽग्निर्न दहति। अत्र अन्तःपुरे, अन्योऽग्निर्न च ज्वलति। मृत्संयुक्तेन वल्मीकमृत्तिकासंमिश्रेण, वैद्युतेन भस्मना विद्युदुद्भूताग्निदग्धद्रुमभवेन भासितेन, करकवारिणा वर्षोपलजलयुक्तेन सता, अवलिप्तं च कृतलेपनमन्तःपुरं च, अन्योऽग्निर्न दहति, न चात्र ज्वलति।

विषप्रतीकारमाह— **जीवन्तीति**। जीवन्तीश्वेतामुष्ककपुष्पवन्दाकाभिः जीवन्ती गुडूची श्वेता शङ्खिनी मुष्कको लोध्रभेदः पुष्पवन्दाका करवीरोपरिजाता वृक्षरुहा ताभिः अर्थात् तासां मूलैः पत्रैश्च गुम्फिताभिर्मालाभिः गृहनिवेशिताभिः, अक्षीवे शिग्रौ जातस्य अश्वत्थस्य पिप्पलस्य, प्रतानेन च तत्पत्रनिर्मितेन माल्येन च गृहनिवेशितेन, गुप्तं गृहं सर्पाः, विषाणि दारदादीनि स्थावरविषाणि वा, न प्रसहन्ते न बाधन्ते। मार्जारमयूरनकुलपृषतोत्सर्गः सर्पान्

**स्सर्गः सर्पान् भक्षयति । शुकः शारिका भृङ्गराजो वा सर्पविषशङ्कायां क्रोशति । क्रौञ्चो विषाभ्याशे माद्यति, ग्लायति जीवञ्जीवकः, म्रियते मत्तकोकिलः, चकोरस्याक्षिणी विरज्येते । इत्येवम् अग्निविषसर्पेभ्यः प्रतिकुर्वीत ।**

**पृष्ठतः कक्ष्याविभागे स्त्रीनिवेशो गर्भव्याधिवैद्यप्रत्याख्यातसंस्था वृक्षोदकस्थानं च । बहिः कन्याकुमारपुरम् । पुरस्तादलङ्कारभूमिः मन्त्रभूमिरुपस्थानं कुमाराध्यक्षस्थानं च । कक्ष्यान्तरेष्वन्तर्वंशिकसैन्यं तिष्ठेत् ।**

भक्षयति विडालकेकिबभ्रुमृगाः गृहे निर्यन्त्रणविसृष्टाः सर्पान् नाशयन्ति । शुकः, शारिका पक्षिभेदः, भृङ्गराजो वा धूम्याटोऽलिभेदो वा, सर्पविषशङ्कायां क्रोशति क्रन्दति । विषाभ्याशे विषसान्निध्ये, क्रौञ्चः पक्षिविशेषः, माद्यति विह्वलति । जीवञ्जीवकः पक्षिभेदः ग्लायति क्षीणहर्षो भवति । मत्तकोकिलः म्रियते । चकोरस्य चन्द्रिकाप्रियस्य पक्षिणः, अक्षिणी विरज्येते विरागं प्राप्नुतः स्ववर्णं त्यजत इत्यर्थः । इत्येवम् उक्तप्रकारं वस्तुतत्त्वं विदित्वा, अग्निविषसर्पेभ्यः, प्रतिकुर्वीत रक्षां विदधीत ।

**पृष्ठत** इति । पृष्ठतः कक्ष्याविभागे राजावसथस्य पश्चाद्भागे पृथङ्निर्मितायां कक्ष्यायां, स्त्रीनिवेशः देवीवासस्थानं भवति । तस्य पृष्ठतः कक्ष्याविभागे, गर्भव्याधिवैद्यप्रत्याख्यातसंस्थाः गर्भसंस्था देवीनां गर्भावस्थाय वासार्था तस्याः पृष्ठतो व्याध्यवस्थायां वासार्था व्याधिसंस्था तस्याः पृष्ठत अचिकित्सनीयरोगा इति वैद्येन परित्यक्तानां देवीनां वासार्था वैद्यप्रत्याख्यातसंस्था चेत्येतास्तिस्रः संस्थाः । तासां पृष्ठतः वृक्षोदकस्थानं च उद्यानतटाकादिकं च भवति । बहिः उक्तेभ्यो बहिर्देशे, कन्याकुमारपुरं कन्यानिवेशः अप्राप्तयौवनराजपुत्रनिवेशश्च भवति । इत्थं पृष्ठसन्निवेशः उक्तः । पुरस्तात्सन्निवेशमाह — **पुरस्तादिति** । पुरस्तात् वासभवनस्यासन्ने कक्ष्याविभागे, अलङ्कारभूमिः दृष्टिविलोभनविचित्रमण्डनयुक्तः प्रासादः, ततो मन्त्रभूमिः मन्त्रसभा ततः उपस्थानम् आस्थानमण्डपः, ततः कुमाराध्यक्षस्थानं कुमारस्थानं यून राजपुत्राणां स्थानम् अध्यक्षस्थानं सन्निधातृसमाहर्तृप्रभृतीनां कार्याध्यक्षाणां स्वकर्मानुष्ठानस्थानं च, भवति । कक्ष्यान्तरेषु कक्ष्याणां मध्येषु अन्तर्वंशिकसैन्यम् अन्तःपुराधिकृतानां कञ्चुकिप्रभृतीनां गणः, तिष्ठेत् ।

अन्तर्गृहगतः स्थविरस्त्रीपरिशुद्धां देवीं पश्येत् । न काञ्चिदभिगच्छेत् । देवीगृहे लीनो हि भ्राता भद्रसेनं जघान, मातुः शय्यान्तर्गतश्च पुत्रः कारूशम् । लाजान् मधुनेति विषेण पर्यस्य देवी काशिराजं, विषदिग्धेन नूपुरेण वैरन्त्यं, मेखलामणिना सौवीरं, जालूथमादर्शेन, वेण्यां गूढं शस्त्रं कृत्वा देवी विदूरथं जघान । तस्मादेतान्यास्पदानि परिहरेत् ।

मुण्डजटिलकुहकप्रतिसंसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत् । नचैनाः कुल्याः पश्येयुरन्यत्र गर्भव्याधिसंस्थाभ्यः । रूपाजीवाः

अन्तर्गृहेत्यादि । अन्तर्गृहगतः स्ववासगृहस्थितः, नतु देवीगृहगतः, स्थविरस्त्रीपरिशुद्धाम् आप्तवृद्धपरिचारिकया परिशोधितां, देवीं पश्येत् । काञ्चिद् नाभिगच्छेत् कामपि देवीमुद्दिश्य स्वयं तद्गृहं न गच्छेत् । देवीगृहाभिगमने दोषं निदर्शयति—देवीगृह इत्यादि । भ्राता कलिङ्गेश्वरस्य भद्रसेनस्य राज्ञः सोदर्यः वीरसेननामा । स हि तद्भार्यया कृतसंजल्पस्तद्गृहैकदेशनिलीनो राज्यं च जिहीर्षुर्भद्रसेनं जघानेति इतिहासः । कारूशं करूशदेशाधिपतिम् । वृद्धस्त्रीजनापरिशोधितदेवीदर्शने दोषं निदर्शयति—लाजानिति । देवी, मधुनेति मधुना माक्षिकेण मिश्रिताः इति वदन्ती, लाजान् विषेण पर्यस्य मिश्रयित्वा भोजयित्वा च, काशिराजं युद्धविजितदेवीबन्धूपरोधापराधिनं, जघान । वैरन्त्यं तन्नामकं वनवासिदेशेश्वरं, देवी सपत्नीमिथ्याभिशंसनमन्युवशंवदा, विषदिग्धेन स्पर्शवेधिगरलोपलिप्तेन, नूपुरेण जघान क्रीडाभिघातमिषेण मारितवतीत्यर्थः । सौवीरं तद्देशपतिं परन्तपाख्यं मेखलामणिना काञ्चीरत्नेन विषदिग्धेन, देवी अतिवाक्पारुष्यतापिता, जघान । जालूथं राजानम् अयोध्याधिपतिं, देवी पतिदारान्तरासक्तिमन्यूपतप्ता, आदर्शेन मुकुरेण विषदिग्धेन, जघान आदर्शस्पर्शेन मुखे विसर्पमुत्पाद्य व्यापादयामास । देवी शस्त्रं वेण्यां गूढं कृत्वा विदूरथं राजानं जघान । तस्माद् एतानि आस्पदानि व्यापत्तिनिमित्तानि, परिहरेत् ।

मुण्डेत्यादि । मुण्डजटिलकुहकैः मुण्डैः बौद्धभिक्षुक्षपणकादिभिः जटिलैः शैवपाशुपतादिभिः कुहकैः मायाप्रयोक्तृभिश्च प्रतिसंसर्गं परिचयम् अर्थाद् देवीनां, प्रतिषेधयेद् वारयेत् । बाह्याभिः दासीभिश्च प्रतिषेधयेद् अर्थात् प्रतिसंसर्गम् । नचेति । कुल्याः देवीबान्धवाः, एनाः देवीः, गर्भव्याधिसंस्थाभ्योऽन्यत्र

**स्नानप्रघर्षशुद्धशरीराः परिवर्तितवस्त्रालङ्काराः पश्येयुः । आशीतिकाः पुरुषाः पञ्चाशत्काः स्त्रियो वा मातापितृव्यञ्जनाः स्थविरवर्षवराभ्यागारिकाश्चावरोधानां शौचाशौचं विद्युः स्थापयेयुश्च स्वामिहिते ।**

**स्वभूमौ च वसेत् सर्वः परभूमौ न सञ्चरेत् ।**
**नच बाह्येन संसर्गं कश्चिदाभ्यन्तरो व्रजेत् ॥**
**सर्वं चावेक्षितं द्रव्यं निबद्धागमनिर्गमम् ।**
**निर्गच्छेदधिगच्छेद् वा मुद्रासङ्क्रान्तभूमिकम् ॥**

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
विंशोऽध्यायः निशान्तप्रणिधिः ॥

प्रसवव्याध्यनुमरणकालेभ्योऽन्यस्मिन् काले, न पश्येयुः । रूपेत्यादि । रूपाजीवाः वेश्याः । स्नानप्रघर्षशुद्धशरीराः स्नानेन कायमलवर्षणेन च शुद्धदेहाः । पश्येयुः, राजानं परिचर्यार्थम् । देवीनां शौचाशौचगवेषणपूर्वं पथि स्थापनं बन्धुकरणीयं के कुर्युस्तत्राह — **आशीतिका** इति । मातापितृव्यञ्जनाः मातापितृसधर्माणः, आशीतिका अशीतिवयस्काः, पुरुषाः, पञ्चाशत्काः पञ्चाशद्वयस्काः, स्त्रियो वा, स्थविरवर्षवराभ्यागारिकाश्च वृद्धाः षण्डाश्च येऽभ्यागारिकाः कुटुम्बचिन्तकास्ते च, अवरोधानाम् अन्तःपुरस्त्रीणां शौचाशौचं विद्युः स्वामिहिते स्थापयेयुश्च, अर्थादवरोधान् ।

**स्वभूमाविति** । सर्वः देवीजनोऽन्तर्वंशिकजनश्च, स्वभूमौ आत्मनः क्लृप्ते स्थाने, वसेत्, परभूमौ न सञ्चरेत् । आभ्यन्तरः कश्चिद् जनः बाह्येन जनेन संसर्गं नच व्रजेद् गच्छेत् ॥

**सर्वमिति** । निबद्धागमनिर्गमम् अमुकस्थानादागतममुकस्थानं गमिष्यतीति पुस्तकार्पितागमनिर्गमं, मुद्रासंक्रान्तभूमिकं मुद्राभिरागमनिर्गमस्थानसम्बन्धिनीभिः संक्रान्ता अङ्किता भूमिः आधारभाण्डं यस्य तत् तथाभूतं, सर्वं द्रव्यं धनम्, अवेक्षितं स्वयं साक्षाद् दृष्टं सत्, निर्गच्छेद् अधिगच्छेद्वा निर्गमयेत् स्वीकुर्याद्वा ॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
विंशोऽध्यायः निशान्तप्रणिधिः ॥

## १८ प्रक. आत्मरक्षितकम्।

**शयनादुत्थितः स्त्रीगणैर्धन्विभिः परिगृह्येत, द्वितीयस्यां कक्ष्यायां कञ्चुकोष्णीषिभिर्वर्षवराभ्यागारिकैः, तृतीयस्यां कुब्जवामनकिरातैः, चतुर्थ्यां मन्त्रिभिः सम्बन्धिभिर्दौवारिकैश्च प्रासपाणिभिः।**

**पितृपैतामहं महासम्बन्धानुबन्धं शिक्षितमनुरक्तं कृतकर्माणं जनमासन्नं कुर्वीत, नान्यतोदेशीयमकृतार्थमानं स्वदेशीयं वाप्यपकृत्योपगृहीतम्। अन्तर्वंशिकसैन्यं राजानमन्तःपुरं च रक्षेत्।**

**गुप्ते देशे माहानसिकः सर्वमास्वादबाहुल्येन कर्म कारयेत्। तद् राजा तथैव प्रतिभुञ्जीत पूर्वमग्नये वयोभ्यश्च बलिं कृत्वा।**

---

**आत्मरक्षितकमिति** सूत्रम्। आत्मनो रक्षणमुच्यत इत्यर्थः। राज्ञः पुत्रदारेभ्यो रक्षणमुक्तं, तदन्येभ्य इदानीमभिधीयते।

**शयनादित्यादि**। धन्विभिः धनुष्पाणिभिः। परिगृह्येत परिवार्येत। कञ्चुकोष्णीषिभिः वारवाणशिरस्त्राणधारिभिः। वर्षवराभ्यागारिकैः षण्डैः राजगृहकार्यचिन्तकैश्च। कुब्जवामनकिरातैः गडुलैः खर्वैर्म्लेच्छजातिविशेषैश्च। प्रासपाणिभिः कुन्तहस्तैः।

अङ्गरक्षकमाह — **पित्रित्यादि**। पितृपैतामहं वंशपारम्पर्यप्राप्तम्। महासम्बन्धानुबन्धं महान् प्रशस्तः सम्बन्धोऽन्वयः येषां ते महासम्बन्धाः महाकुलाः तैरनुबन्धः सम्बन्धानुवृत्तिर्यस्य तम्। शिक्षितं कृतविद्यम्। कृतकर्माणं कृतं दृष्टं कर्म अनुरक्तपुरुषोचितं यस्य तम्। आसन्नं कुर्वीत निकटवर्तिनं कुर्वीत स्वदेहरक्षार्थम्। वैदेशिकमकृतधनहिरण्यादिदानसत्कारं सन्तं, स्वदेशीयमपि वा पूर्वमपकृत्य पश्चात् स्वीकृतं जनम् आसन्नं न कुर्यादित्याह —**नान्यतोदेशीयमित्यादि**। **अन्तरिति**। अन्तर्वंशिकसैन्यं कञ्चुकिनिर्मुण्डकादिगणः, राजानम् अन्तःपुरं च रक्षेत्।

अभ्यवहाररक्षार्थमाह—**गुप्ते** इति। माहानसिकः पाकशालानियुक्तः, गुप्ते अन्यादृश्ये देशे, सर्वं कर्म सर्वप्रकारं पाककर्म, आस्वादबाहुल्येन कारयेत् बहुलमास्वाद्य साधयेत्, अथवा आस्वादः स्वादुता तदतिशययुक्तं कारयेत्। राजा, तत् साधितमन्नादिकं, तथैव तेनैव रूपेण युक्तं न तु यातयामतया वैरूप्यमापन्नं, प्रतिभुञ्जीत। किं कृत्वा, पूर्वं स्वयमभ्यवहरणात्

**अग्नेर्ज्वालाधूमनीलता शब्दस्फोटनं च विषयुक्तस्य, वयसां विपत्तिश्च । अन्नस्योष्मा मयूरग्रीवाभः शैत्यमाशु क्लिष्टस्येव वैवर्ण्यं सोदकत्वमक्लिन्नत्वं च । व्यञ्जनानामाशुशुष्कत्वं च क्वाथः श्यामफेनपटलविच्छिन्नभावो गन्धस्पर्शरसवधश्च । द्रवेषु हीनातिरिक्तच्छायादर्शनं फेनपटलसीमन्तोर्ध्वराजीदर्शनं च । रसस्य मध्ये नीला राजी, पयसस्ताम्रा, मद्यतोययोः काली, दध्नः श्यामा, मधुनः श्वेता । द्रव्याणामार्द्राणाम्**

प्राक्, अग्नये बलिं कृत्वा वैश्वदेवं कृत्वा, वयोभ्यश्च बलिं कृत्वा पक्षिभ्यश्च बलिं दत्त्वा । तदुभयं विहितानुष्ठानार्थं विषप्रतीकारार्थं च बोद्धव्यम् ।

विषयुक्तचिह्नान्याह—**अग्नेरिति** । विषयुक्तस्य विषदूषितान्नसंपृक्तस्य, अग्नेः, ज्वालाधूमनीलता ज्वालाधूमयोर्नीलत्वं, शब्दस्फोटनं च चटचटाशब्दश्च भवति । विषयुक्तानां वयसां विषसंपृष्टान्नभक्षिणां पक्षिणां, विपत्तिश्च मरणं च भवति । **अन्नस्येति** । अन्नस्य विषमिश्रस्य, ऊष्मा बाष्पः, मयूरग्रीवाभः मयूरकण्ठवद् मेचकः, आशु शैत्यं सद्यः शीतत्वं, क्लिष्टस्येव वैवर्ण्यं करसंपिष्टस्येव वर्णवैरूप्यं, सोदकत्वं सिक्थैकीभावः अवैशद्यं वा, अक्लिन्नत्वं च असम्यक्पाकत्वं च भवति । **व्यञ्जनानामिति** । व्यञ्जनानां सूपादीनाम्, आशुशुष्कत्वं शीघ्रशोषः, क्वाथः अग्नियोगे तक्रादेरिवोत्क्वथनं, श्यामफेनपटलविच्छिन्नभावः श्यामस्य जायमानस्य फेनमण्डलस्य विच्छिन्नत्वं व्यञ्जनाद् विभक्ततया स्थितिः, गन्धस्पर्शरसवधश्च गन्धस्पर्शरसानां नाशश्च, भवति । **द्रवेष्विति** । द्रवेषु यूषादिषु विषयुक्तेषु, हीनातिरिक्तच्छायादर्शनं हीनाया अतिरिक्ताया वा स्वीयच्छायाया दर्शनं, फेनपटलसीमन्तोर्ध्वराजीदर्शनं फेनपटलस्य दर्शनं सीमन्तदर्शनं विभागदर्शनम्—अर्थात् फेनपटलस्य यूषादिभ्यो विभक्ततयावस्थानदर्शनम्—ऊर्ध्वराजीदर्शनम् उपरिरेखादर्शनं च, भवति । **रसस्येति** । रसस्य सर्पिस्तैलेक्षुरसादेः विषयुक्तस्य, मध्ये नीला राजी, पयसः क्षीरस्य मध्ये ताम्रा राजिः, मद्यतोययोः सुराजलयोः मध्ये काली राजिः, दध्नः श्यामा वैदूर्यवर्णा राजिः, मधुनः माक्षिकस्य श्वेता राजिः, भवति । **द्रव्याणामिति** । आर्द्राणां द्रव्याणाम् आम्रदाडिमफलादीनां विषयुक्तानाम्, आशुप्रम्लानत्वम्, उत्पक्वभावः अतिपक्वस्येव पूतीभावः, क्वाथनीलश्यावता च क्वाथे निष्पाके नीलत्वं कार्ष्ण्यं श्यावत्वं कापिशयं च भवति । शुष्काणां द्रव्याणाम्,

१. 'मा च म' ख. पाठः.

**आशुप्रम्लानत्वमुत्पक्वभावः क्वाथनीलश्यावता च । शुष्काणामाशु-शातनं वैवर्ण्यं च । कठिनानां मृदुत्वं मृदूनां कठिनत्वं च । तदभ्याशे क्षुद्रसत्त्ववधश्च । आस्तरणप्रावरणानां श्याममण्डलता तन्तुरोमपक्ष्म-शातनं च । लोहमणिमयानां पङ्कमलोपदेहता स्नेहरागगौरवप्रभाववर्ण-स्पर्शवधश्च । इति विषयुक्तलिङ्गानि ।**

**विषप्रदस्य तु शुष्कश्याववक्त्रता वाक्सङ्गः स्वेदो विजृम्भणं चातिमात्रं वेपथुः प्रस्खलनं वाक्यविप्रेक्षणमावेगः कर्मणि स्वभूमौ चानवस्थानमिति ।**

**तस्मादस्य जाङ्गुलीविदो भिषजश्चासन्नाः स्युः ।**

आशुशातनं चूर्णीभावः, वैवर्ण्यं च भवति । कठिनानां द्रव्याणां विषयुक्तानां मृदुत्वं, मृदूनां कठिनत्वं च भवति । तदभ्याश इति । तदभ्याशे क्षुद्रसत्त्व-वधश्च विषयुक्तद्रव्यसमीपे चरतां क्षुद्रजन्तूनां पिपीलिकादीनां मरणं च भवति । आस्तरणेत्यादि । आस्तरणप्रावरणानाम् आसनशयनकम्बलानां नीशाराणां च कार्पासतन्त्वाविकादिमयानां विषस्पृष्टानां, श्याममण्डलता विवर्णमण्डलयुक्तता, तन्तुरोमपक्ष्मशातनं च तन्तूनां रोम्णां च यानि पक्ष्माणि सूक्ष्मांशाः तेषां शातनं भ्रंशनं च, भवति । लोहेत्यादि । लोहमणिमयानां लोहः सुवर्णादिः मणिः स्फटिकादिः तन्मयानां वस्तूनां विषयुक्तानां, पङ्कमलोपदेहता पङ्कमलेनोपदेहो लेपनं यस्मिंस्तत्ता, स्नेहरागगौरवप्रभाववर्णस्पर्शवधश्च स्नेहः स्निग्धत्वं रागः त्विट् गौरवं गुरुत्वं प्रभावः स्वकार्यसाधनशक्तिः वर्णः शुक्लादिः स्पर्शः श्लक्ष्णखरादिस्पर्शगुणः एतेषां नाशश्च भवति । इति विषयुक्तलि-ङ्गानि विषयुक्तवस्तुलक्षणानि, विजानीयादिति शेषः ।

विषप्रदस्य निग्रहाय लिङ्गान्याह — विषेत्यादि । शुष्कश्याववक्त्रता शुष्ककपिशमुखत्वम् । वाक्सङ्गः वाचि प्रतिबन्धः । प्रस्खलनम् अविषमेऽपि देशे । वाक्यविप्रेक्षणं वाक्ये अन्येनाप्युच्यमानेऽवधानदानम् । आवेगः परवशता । कर्मणि अनवस्थानं स्वव्यापारेऽनवस्थितिः, आरब्धं कर्मानिर्वर्त्यै-वान्यत्र प्रवृत्तिः । स्वभूमौ अनवस्थानं च प्रथमादिकक्ष्यानियुक्तस्य तां विहाय द्वितीयादिकक्ष्यागमनं च ।

**तस्मादित्यादि** । अस्य राज्ञः । जाङ्गुलीविदः विषविद्याभिज्ञाः । भिष-जश्च विषेतरचिकित्सकाश्च ।

**भिषग् भैषज्यागारादास्वादविशुद्धमौषधं गृहीत्वा पाचकपेषकाभ्यामात्मना च प्रतिस्वाद्य राज्ञे प्रयच्छेत् । पानं पानीयं चौषधेन व्याख्यातम् ।**

**कल्पकप्रसाधकाः स्नातशुद्धवस्त्रहस्ताः समुद्रमुपकरणमन्तर्वंशिकहस्तादादाय परिचरेयुः ।**

**स्नापकसंवाहकास्तरकरजकमालाकारकर्म दास्यः कुर्युः, ताभिरधिष्ठिता वा शिल्पिनः । आत्मचक्षुषि निवेश्य वस्त्रमाल्यं दद्युः, स्नानानुलेपनप्रघर्षचूर्णवासस्नानीयानि च स्ववक्षोबाहुषु च । एतेन परस्मादागतकं च व्याख्यातम् ।**

---

भिषगिति । भिषग्, भैषज्यागाराद् औषधशालायाः, आस्वादविशुद्धं स्वयमास्वादेन निर्दोषतयावगतम्, औषधं गृहीत्वा, पाचकपेषकाभ्याम् औषधपक्तृपेष्टृभ्याम्, आत्मना च, प्रतिस्वाद्य राजसमक्षं स्वादयित्वा, राज्ञे प्रयच्छेद् दद्यात । पानमिति । पानं मद्यं, पानीयं च जलं च, औषधेन व्याख्यातम् औषधदानोक्तविधिना शोधयित्वा दातव्यमित्युक्तप्रायमित्यर्थः ।

**कल्पके**त्यादि । कल्पकप्रसाधकाः कल्पका नापिताः श्मश्रुशिल्पिनः प्रसाधका अलङ्कर्तारश्च, स्नातशुद्धवस्त्रहस्ताः सन्तः स्नाताः शुद्धवस्त्राः शुद्धहस्ताश्च सन्तः, समुद्रं मुद्राङ्कितम् उपकरणं क्षुरवस्त्राभरणमञ्जूषादिकम्, अन्तर्वंशिकहस्ताद् आदाय तदुपनेतृकञ्चुकिहस्ताद् गृहीत्वा, परिचरेयुः, राजानम् ।

**स्नापके**त्यादि । तत्र संवाहकः अङ्गमर्दकः । आस्तरकः आसनशयनकल्पकः । शेषाः प्रसिद्धाः । स्नापकादिकर्म दास्यः सुपरीक्षिताः कुर्युः । ताभिः दासीभिः, अधिष्ठिता अध्यक्षिताः, शिल्पिनो वा स्नापकादिशिल्पिनो वा, कुर्युः । **आत्मे**त्यादि । वस्त्रमाल्यम् आत्मचक्षुषि, निवेश्य विषयोगशुद्धिबोधनार्थं निधाय, दद्युः राज्ञे । स्नानानुलेपनप्रघर्षचूर्णवासस्नानीयानि च स्नानं गन्धामलकादि अनुलेपनं चन्दनादि प्रघर्षः पञ्चकषायादि चूर्णवासः पटवासकादि स्नानीयं स्नाने शिरसि देयं चूर्णम् एतानि च, स्ववक्षोबाहुषु स्ववक्षःसहितेषु भुजेषु, चाद् उक्ते च, निवेश्य दद्युः । **एतेने**ति । परस्मादागतकं च परदेशात् प्राप्तं भोग्यवस्तु च, एतेन उक्तेन वस्त्रादिदानविधिना, व्याख्यातं प्रतिपादितदानविधानं, बोद्धव्यमिति शेषः ।

**कुशीलवाः शस्त्राग्निरसवर्जं नर्मयेयुः । आतोद्यानि चैषामन्तस्तिष्ठेयुः, अश्वरथद्विपालङ्काराश्च ।**

**मौलपुरुषाधिष्ठितं यानवाहनमारोहेत्, नावं चाप्तनाविकाधिष्ठिताम् । अन्यनौप्रतिबद्धां वातवेगवशां च नोपेयात् । उदकान्ते सैन्यमासीत । मत्स्यग्राहविशुद्धमवगाहेत । व्यालग्राहपरिशुद्धमुद्यानं गच्छेत् ।**

**लुब्धकैः श्वगणिभिरपास्तस्तेनव्यालपराबाधभयं चललक्षपरिचयार्थं मृगारण्यं गच्छेत् ।**

**आप्तशस्त्रग्राहाधिष्ठितः सिद्धतापसं पश्येत्, मन्त्रिपरिषदा सामन्तदूतम् । सन्नद्धोऽश्वं हस्तिनं रथं वारूढः सन्नद्धमनीकं गच्छेत् ।**

---

**कुशीलवा** इति । कुशीलवाः लङ्घनप्लवनादिनर्मवृत्तयो मनुष्यजातिभेदाः, शस्त्राग्निरसवर्जम् आयुधवह्निविषाणि प्रेक्षणीयाङ्गानि वर्जयित्वा तदन्यैरुपकरणैरित्यर्थः, नर्मयेयुः क्रीडां दर्शयेयुः, राजान्तिके । एषां कुशीलवानाम्, आतोद्यानि च वाद्यानि च, अन्तः राजभवनाभ्यन्तरे, तिष्ठेयुः, विषशङ्कापरिहारार्थं, नर्मप्रदर्शनावसरे परं तैर्गृह्येरन्नित्यभिप्रायः । अश्वरथद्विपालङ्काराश्च अश्वादीनां त्रयाणाम् अलङ्काराश्च, अन्तस्तिष्ठेयुरिति सम्बध्यते ।

**मौलेत्यादि** । मौलपुरुषाधिष्ठितम् आप्तप्रधानपुरुषकृताध्यक्ष्यं, यानवाहनं शिबिकादिकमश्वादिकं च, आरोहेत् । नावं च, आप्तनाविकाधिष्ठितां विश्वस्ततारकाध्यक्षितां सतीम्, आरोहेत् । अन्यनौप्रतिबद्धाम् अन्यया नावा सहैव नेतव्या यथा स्यात् तथान्यस्यां नावि सूत्रबद्धां, नावं, वातवेगवशां वातायत्तगमनां नावं च, नोपेयात् नारोहेत् । नावा गच्छतश्च रक्षार्थमुभयतीरयोः सैन्यं तिष्ठेदित्याह — **उदकान्त** इति । **मत्स्येत्यादि** । मत्स्यग्राहविशुद्धं मत्स्यग्राहाः कैवर्ताः तैर्विशुद्धं परिशोधितम्, अर्थान्निश्रिततिमिनक्रादिहिंस्रजन्त्वसान्निध्यं, जलम्, अवगाहेत स्नानार्थम् । **व्यालेत्यादि** । व्यालग्राहपरिशुद्धं व्यालग्राहाः सर्पग्राहिणः तैः परिशोधितम्, उद्यानं गच्छेत् ।

**लुब्धकैरिति** । लुब्धकैः व्याधैः, श्वगणिभिः श्वगणजीविभिश्च, अपास्तस्तेनव्यालपराबाधभयं निरस्तचोरव्याघ्राद्युपद्रवभयं, मृगारण्यं, चललक्षपरिचयार्थं हरिणादिषु चललक्ष्येषु वेधाभ्यासार्थं, गच्छेत् ।

अपूर्वं सिद्धतापसं दिदृक्षुमागतम् आप्तशस्त्रिगुप्त एव सन् पश्येत् शत्रुप्रणिहितत्वभयादित्यभिप्रेत्याह — **आप्तेत्यादि** । **मन्त्रीत्यादि** । मन्त्रिपरिषदा, अधिष्ठित इत्यर्थः, सामन्तदूतं पश्येत् । **सन्नद्ध** इति । **सन्नद्धः** शिरस्त्रा-

**निर्याणेऽभियाने च राजमार्गमुभयतः कृतारक्षं दण्डिभिरपास्तशस्त्रहस्तप्रव्रजितव्यङ्गं गच्छेत् । न पुरुषसम्बाधमवगाहेत । यात्रासमाजोत्सवप्रवहणानि च दशवर्गिकाधिष्ठितानि गच्छेत् ।**

**यथा च योगपुरुषैरन्यान् राजाधितिष्ठति ।**
**तथायमन्यबाधेभ्यो रक्षेदात्मानमात्मवान् ॥**

इति कौटलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे एकविंशोऽध्यायः आत्मरक्षितकम् । एतावता कौटलीयस्यार्थशास्त्रस्य विनयाधिकारिकं प्रथममधिकरणं समाप्तम् ॥

णाद्यामोचनसुभगयुद्धोचितवेषः, अश्वं हस्तिनं रथं वा आरूढः सन्, सन्नद्धम् अनीकं युद्धसज्जं सैन्यं, गच्छेत् ।

**निर्याण** इति । निर्याणे देशान्तरं प्रति गमने, अभियाने प्रवेशे च, राजमार्गम् उभयतः राजमार्गस्योभयपार्श्वयोः, दण्डिभिः वेत्रिभिः, कृतारक्षं कृतरक्षाविधानं यथा भवति तथा, अपास्तशस्त्रहस्तप्रव्रजितव्यङ्गं शस्त्रहस्ताः प्रव्रजिताः सन्न्यासिनः व्यङ्गाः अङ्गविहीनाश्च अपास्ताः राजदृष्टिगोचरादुत्सारिताः यस्मिन् कर्मणि तद् यथा भवति तथा, गच्छेत् । **न पुरुषे**त्यादि । पुरुषसम्बाधं जनसङ्कुलं प्रदेशं, नावगाहेत न प्रविशेत् । **यात्रे**त्यादि । यात्रासमाजोत्सवप्रवहणानि च यात्रा देवतानां, समाजो जनसमुदायः, उत्सवः इन्द्रवसन्तोत्सवादिः, प्रवहणम् उद्यानभोजनादि एतानि, दशवर्गिकाधिष्ठितानि गच्छेद् दशवर्गिकेण दशभटनायकेन अधिष्ठितानि कृत्वा गच्छेद् न त्वेकाकी परिमितपरिवारो वेत्यर्थः ।

अध्यायप्रान्ते श्लोकमाह — **यथा** चेति । यथा, अयं राजा विजिगीषुः, योगपुरुषैः कापटिकैः गूढपुरुषैः, अन्यान् नृपतीन्, अधितिष्ठति बाधत इत्यर्थः, तथा, अन्यबाधेभ्यः तत्प्रकारेभ्यः अन्यनृपोत्पादितेभ्यः योगपुरुषोपद्रवेभ्यः, आत्मानम्, आत्मवान् प्रयत्नवान् सन् रक्षेत् ॥

व्याख्यायामर्थशास्त्रस्य कौटल्यमुनिजन्मनः ।
आद्याधिकरणं पूर्ति गाणपत्यामुपागमत् ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहाराभिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे एकविंशोऽध्यायः आत्मरक्षितकम् । विनयाधिकारिकं प्रथममधिकरणं समाप्तम् ॥

# अध्यक्षप्रचारः — द्वितीयमधिकरणम् ।

## १९. प्रक. जनपदनिवेशः।

**भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् ।**

**शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत् । नदीशैलवनगृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षानन्तेषु सीम्नां स्थापयेत् ।**

**अष्टशतग्राम्या मध्ये स्थानीयं, चतुश्शतग्राम्या द्रोणमुखं,**

---

अथाध्यक्षप्रचाराख्यं द्वितीयमधिकरणमारभ्यते । यथोक्तगुणसम्पन्नो राजा सर्वाणि कार्याणि तत्तदध्यक्षद्वारेणैवाध्यक्षयितुं प्रभवतीत्यतोऽध्यक्षांस्तद्व्यापारांश्च प्राधान्येनाभिधातुमिदमधिकरणम् । तत्रेदं प्रथमं सूत्रं — **जनपदनिवेश** इति। जनश्चतुर्वर्णाश्रमजातिलक्षणः, पदं तस्य स्थानं स्थानीय-द्रोणमुख-कार्वटिक-संग्रह-ग्रामादिकं, तस्य निवेशः रचनात्राभिधीयत इति सूत्रार्थः। 'स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतिरि'त्युक्तं, तत्र स्वाम्यमात्यप्रकृती प्रतिपादिते, जनपदप्रकृतिरिदानीमभिधीयते ।

**भूतेत्यादि**। भूतपूर्वं पूर्वं स्थितम्, अभूतपूर्वम् अभिनवं वा, जनपदं, परदेशापवाहनेन परदेशाज्जनानयनेन, स्वदेशाभिष्यन्दवमनेन वा अभिष्यन्दोऽतिवृद्धिः वमनमाहरणं स्वदेशे जनानामतिवर्धनादाधारापर्याप्तिदोषादन्यत्राहरणेन वा, निवेशयेद् रचयेत् ।

**शूद्रेत्यादि**। ग्रामं, शूद्रकर्षकप्रायं शूद्रकृषीवलबहुलं, कुलशतावरं गृहशतान्न्यूनं, पञ्चशतकुलपरं पञ्चशतानधिकगृहयुक्तं, क्रोशद्विक्रोशसीमानं क्रोशसीमानं द्विक्रोशसीमानं वा एकस्माद् ग्रामाद् ग्रामान्तरस्य क्रोशदूरव्यवधानं क्रोशद्वयव्यवधानं वा यथा भवेत् तथा क्लसमित्यर्थः, अन्योन्यमारक्षतीत्यन्योन्यारक्षं परस्परसाहाय्यकरणक्षमं, निवेशयेत् । **नदीत्यादि**। सीम्नाम् अन्तेषु, नदीं, शैलः शिलाकूटः, वनं, गृष्टिर्बदरा नामौषधिर्वृक्षविशेषो वा, दरी श्वभ्रं, सेतुबन्धः, शाल्मली स्थिरायुराख्यो वृक्षः, शमी सक्तुफला, क्षीरवृक्षः वटादिरित्येतान् स्थापयेत् सीमरक्षार्थम् ।

**अष्टशतेत्यादि**। अष्टशतग्राम्याः अष्टशतानां ग्रामाणां समूहस्य, मध्ये, स्थानीयं तदाख्यं तावद्ग्रामजनतायाः क्रयविक्रयादिकर्मणोपजीव्यं रमणीयं

**द्विशतग्राम्याः कार्वटिकं, दशग्रामीसङ्ग्रहेण सङ्ग्रहणं स्थापयेत् ।**

**अन्तेष्वन्तपालदुर्गाणि जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् । तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः ।**

**ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत् । अध्यक्षसङ्ख्यायकादिभ्यो गोपस्थानिकानीकस्थचिकित्सकाश्वदमकजङ्घाकारिकेभ्यश्च विक्रयाधानवर्जम् ।**

---

महाग्रामं, स्थापयेत् निवेशयेत्, चतुश्शतग्राम्याः मध्ये, द्रोणमुखं तदाख्यं स्थानीयप्रत्यवरं ग्रामभेदं स्थापयेत्, द्विशतग्राम्या मध्ये, कार्वटिकं तदाख्यं कर्वटापरपर्यायं द्रोणमुखप्रत्यवरं स्थापयेत्, दशग्रामीसंग्रहेण ग्रामदशकसंग्रहणेन, संग्रहणं तदाख्यं कर्वटादधमं महाद्रङ्गापरपर्यायं स्थापयेत् ।

अन्तेष्विति । अन्तेषु जनपदावसानेषु, अन्तपालदुर्गाणि, अन्तपालाधिष्ठितानि अन्तपालैरनुष्ठिताध्यक्ष्याणि, जनपदद्वाराणि जनपदप्रवेशमार्गभूतानि च स्थापयेत् । तेषाम् अन्तराणि अन्तपालदुर्गाणामन्तरालदेशान्, वागुरिकशबरपुलिन्दचण्डालारण्यचराः वागुरिकाः मृगबन्धनजीविनः शबराः शूद्राद् भिल्ल्यां जाताः पुलिन्दाः निष्टयात् किरात्यां जाताः चण्डालाः श्मशानपालाः अरण्यचराः वनचारिणश्च, रक्षेयुः ।

ऋत्विगित्यादि । ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यः याजकाध्यापकपुरोधश्छान्दसेभ्यः, अदण्डकराणि दण्डो नाम द्विःकृषिक्लृप्तौ त्रिःकृष्यनुष्ठानादिनिमित्तः कुल्यादिजलात्युपयोगादिनिमित्तो वा दमः करः कृषिफलषष्ठांशः तदुभयरहितानि, अभिरूपदायकानि अभिरूपेभ्यः अर्हेभ्यः पुत्रादिभ्यो दायः दानं येषां तानि तथाभूतानि वंशपारम्पर्यभोग्यानीत्यर्थः यथेच्छविनियोगयोग्यानीति वा, ब्रह्मदेयानि ब्राह्मणेभ्यो देयानि अर्थात् क्षेत्राणि, प्रयच्छेद् दद्यात् । अध्यक्षेत्यादि । विक्रयाधानवर्जं मूल्यमादाय दानं विक्रयः आधीकरणमाधानं तदुभयाधिकारवर्जं केवलोपभोगायेत्यर्थः, अध्यक्षसंख्यायकादिभ्यः अध्यक्षाः सुवर्णाध्यक्षादयः सङ्ख्यायकाः गणकाः तत्प्रभृतिभ्यः, गोपस्थानिकानीकस्थचिकित्सकाश्वदमकजङ्घाकारिकेभ्यश्च गोपः दशग्रामीपञ्चग्राम्याद्यधिकारी स्थानिको नगरचतुर्भागाधिकारी अनीकस्थः हस्तिशिक्षा-

---

१. 'सार्व' ख. पाठः. २. 'ङ्घालके' ग. पाठः.

**करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् । अकृतानि कर्तृभ्यो नादेयात् ।**

**अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत् । ग्रामभृतकवैदेहका वा कृषेयुः । अकृषन्तोऽवहीनं दद्युः । धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात् । तान्यनु सुखेन दद्युः ।**

**अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपघातिकौ वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । निवेशसमकालं यथागतकं वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात् ।**

---

विचक्षणः चिकित्सको वैद्यः अश्वदमकः अश्वशिक्षाभिज्ञः जङ्घाकारिकः जाङ्घिको दूरदेशगतागतजीवी एतेभ्यश्च, क्षेत्रं प्रयच्छेदिति सामर्थ्यलभ्यम् ।

**करदेभ्य** इति । करदेभ्यः राजभागदायिभ्यः, कृतक्षेत्राणि कृतानि क्षेत्राणि पूर्वसिद्धसौष्ठवान् व्रैहेयशालेयादीन् केदारान्, ऐकपुरुषिकाणि एकेनैव ग्रहीतृपुरुषेण भोग्यानि, प्रयच्छेत् । अकृतानि साध्यसौष्ठवानि अर्थात् क्षेत्राणि, कर्तृभ्यो नादेयात् सौष्ठवसाधकेभ्यः करदेभ्यो न गृह्णीयात्, सर्वविधस्वाम्येन तेष्वेव स्थापयेदित्यर्थः । इह आदेयादित्यात्मनेपदाकरणमार्षम् ।

**अकृषतामिति** । अकृषतां कृषिमकुर्वतां, क्षेत्राणीति शेषः, आच्छिद्य हृत्वा, अन्येभ्यः प्रयच्छेत् । तदभावे ग्रामभृतकवैदेहकाः ग्रामाधिकारिणो वणिजश्च, कृषेयुः । अकृषन्तः अभ्युपेत्य कृषिमकुर्वन्तः, अवहीनं नष्टं, दद्युः । अनुपायाच्चेदकर्षणं तदा कथमित्याह — धान्यपशुहिरण्यैश्च कृष्यनुष्ठानापेक्षितैः, एनान् अभ्युपेतकृषीन् अनुगृह्णीयात् । अनु पश्चात् कृषिफलप्राप्त्यनन्तरं, तानि, धान्यादीनि सुखेन आत्मवृत्त्यपीडया, दद्युः, कर्षका राज्ञे ।

**अनुग्रहेत्यादि** । एभ्यः कृषिकर्तृभ्यः, अनुग्रहपरिहारौ च स्वस्थवृद्ध्यर्थं दीयमानं द्रव्यमनुग्रहः दौस्थ्यपरिहारेण स्वास्थ्यसिद्ध्यर्थं दीयमानं द्रव्यं परिहारः तौ, कोशवृद्धिकरौ दद्यात् आत्मकोशवर्धने यथा पर्यवस्येतां तथा दद्यात् । **कोशोपघातिकौ** कोशक्षयफलौ अनुग्रहपरिहारौ, वर्जयेत् । कुतः, हि यतः अल्पकोशः राजा पौरजानपदानेव, ग्रसते पीडयति, स्वकोशपूरणार्थम् । **निवेशेत्यादि** । निवेशसमकालं परिहारं निवेशः इदम्प्रथमकुलस्थापनं तत्तुल्यकालं परिहारं तत्काले क्लृप्तो यः स्वास्थ्यसिद्ध्यर्थं उपकारस्तमित्यर्थः, दद्यात् । यथागतकं वा दद्यात् आगतानतिक्रमेण च दद्यात्

**आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत् ।**

**सहोदकमाहार्योदकं वा सेतुं बन्धयेत् । अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्, पुण्यस्थानारामाणां च । सम्भूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः । व्ययकर्मणि च भागी स्यात् , न चांशं लभेत ।**

---

नवनवागतकुलेभ्योऽपि दद्यादित्यर्थः । **निवृत्तेत्यादि** । निवृत्तपरिहारान् प्रत्यर्पितपरिहारद्रव्यान्, पितेव, अनुगृह्णीयाद् वृद्ध्यर्थमनुग्रहद्रव्यं दत्त्वोपकुर्यात् ।

**आकरेत्यादि** । आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् आकरकर्मान्तः आकरव्यापारस्थानं द्रव्यवनं दारुचन्दननिर्यासाद्युपकरणप्रसवक्षमं वनं हस्तिवनं गजवनं व्रजप्रचारः गोध्यक्षवक्ष्यमाणः वणिक्पथप्रचारः वणिक्पथव्यापारः एतान्, वारिस्थलपथपण्यपत्तनानि च जलपथस्थलपथपण्यक्रयविक्रयस्थानानि च, निवेशयेत् कारयेत् । पत्तनशब्दस्य क्रयविक्रयस्थानवाचित्वमाश्रित्येत्थं व्याख्यातम् । नावैकगम्यपुरवाचित्वाश्रयणे तु पण्यपत्तनं पण्यप्रधानं नौमात्रगम्यं पुरमिति व्याख्येयम् । पट्टनशब्दपाठे पुनः पण्यपट्टनं पण्यप्रधानं पट्टनं शकटैरश्वैर्नौभिश्च गम्यं पुरमित्यर्थः, 'पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव च' इति यादवाभिधानात् ।

**सहोदकमिति** । सहोदकं नित्यप्रवृत्तोदकं नद्यादौ, सेतुं वारणं, बन्धयेत् कुल्यादिद्वारेण कृष्याद्यर्थम् । आहार्योदकं नद्यादितो वर्षासु तुङ्गस्थलेभ्यश्च समानेयजलं सेतुं वा बन्धयेत् । बध्नतां सेतुं रचयताम्, अन्येषां वा जनानां च, भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् भूमिः प्रभूतजलावरोधयोग्यं स्थलं मार्गः जलप्रवेशनिर्गमसरणिः वृक्षोपकरणं सारदार्वादिकम् एतैरनुग्रहम् एतद्दानोपकारं कुर्यात् । पुण्यस्थानारामाणां च निर्मीयमाणानां विषये, भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् । **सम्भूयेत्यादि** । सम्भूयसेतुबन्धाद् जनैः सङ्घीभूय क्रियमाणात सेतुबन्धाद्, अपक्रामतः अपसरतः अनिच्छया स्वीयं कर्मांशमकुर्वतो जनस्य कर्मकरबलीवर्दाः भृत्याः उक्षाणश्च, कर्म कुर्युः राजा बलात् तैः कर्म कारयेदित्यभिप्रायः । अपक्रामतोऽन्यमपि दण्डमाह — **व्ययकर्मणीति** । व्ययकर्मणि च भागी अंशभाक् स्यात्, अंशं च न लभेत, अर्थात् सेतुबन्धानन्तरभवे तत्फले ।

मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् । दासाहितकबन्धूननशृण्वतो राजा विनयं ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्, स्त्रियमप्रजातां प्रजातायाश्च पुत्रान् ।

बालद्रव्यं ग्रामवृद्धा वर्जयेयुरा व्यवहारप्रापणात्, देवद्रव्यं च ।

अपत्यदारान् मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः, अन्यत्र मातुः ।

पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वः साहसदण्डः, स्त्रियं च प्रव्रा-

---

मत्स्येत्यादि । सेतुषु, उत्पद्यमानानामिति शेषः, मत्स्यप्लवहरितपण्यानां मत्स्याः प्रसिद्धाः प्लवाः कारण्डवाः जलजलजविहारिणः हरितानि पद्मोत्पलकशेरुकादीनि एषां पण्यवस्तूनां, स्वाम्यं स्वामित्वं, राजा गच्छेत्, नतु सम्भूयसेतुकारिणोऽपि । दासेत्यादि । अननुशृण्वतः स्वरक्षकनिदेशावधीरिणः, दासाहितकबन्धून् दासान् गर्भदास-गृहजात-क्रीत-लब्ध-दायोपगतादीन् आहितकान् स्वामिना धनग्रहणेनाधितां नीतान् बन्धून् पुत्रादींश्च, राजा, विनयं प्रणतिं, ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च अनाथा ये बालादयः तांश्च, बिभृयात् पोषयेत् । अप्रजातां वन्ध्यां स्त्रियं, प्रजातायाः पुत्रांश्च, बिभृयात्, सा च ते च यद्यनाथा इत्यार्थम् ।

बालेत्यादि । बालद्रव्यं बालस्य अप्राप्तव्यवहारस्य नाथहीनस्य द्रव्यं, ग्रामवृद्धाः, वर्जयेयुः नोपयुञ्जीरन् तथैव स्थापयेयुर्वर्धनार्हं चेद् वर्धयेयुश्चेत्यभिप्रायः । कियन्तं कालम्, आ व्यवहारप्रापणात् व्यवहारप्राप्तिकालं यावत् । देवद्रव्यं च देवालयद्रव्यं च, ग्रामवृद्धा वर्जयेयुः, अवधेरयोगान्नित्यम् ।

अपत्येत्यादि । अपत्यदारान् अपत्यं दारांश्च । दारमिति पाठे समाहारद्वन्द्वः । अप्राप्तव्यवहारान् भ्रातॄन् बालान् सोदर्यान् । कन्याः भगिनीः विधवा भगिनीश्च । शक्तिमतः रक्षणोपायवतः । पतितेभ्योऽन्यत्र पतितव्यतिरेकेण, अपत्यादीनामपतितानामेवारक्षणे दण्डो नतु पतितानाम् । पतितेष्वपि प्रतिप्रसवमाह — अन्यत्र मातुरिति । माता तु पतितापि रक्षणीयैवेत्यर्थः ।

पुत्रेत्यादि । पुत्रदारमप्रतिविधाय प्रव्रजतः पुत्राणां दाराणां च जीवनोपायमदर्शयित्वा सन्न्यस्यतः, स्त्रियं प्रव्राजयतश्च प्रव्रजन्तीं प्रयोजयतश्च, पूर्वः

जयत: । लुप्तव्यवायः प्रव्रजेदापृच्छ्य धर्मस्थान्, अन्यथा नियम्येत ।

वानप्रस्थादन्यः प्रव्राजितभावः, सुजातादन्यः सङ्घः, सामुत्थायकादन्यः समयानुबन्धो वा नास्य जनपदमुपनिविशेत ।

न च तत्रारामा विहारार्थाः शालाः स्युः । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः, निराश्रयत्वाद् ग्रामाणां, क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति ।

साहसदण्डः प्रथमः साहसदण्डः 'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः' इति मनूक्तलक्षणः कर्तव्यः । लुप्तेत्यादि । लुप्तव्यवायः निश्शेषनष्टमैथुनशक्तिः पुरुषः, धर्मस्थान् धर्मशास्त्रानुसारेण व्यवहारनिर्णयेऽधिकृतान् प्राड्विवाकादीन्, आपृच्छ्य अनुज्ञाप्य, प्रव्रजेत् परिव्रजेत् सन्न्यस्येत, अन्यथा नियम्येत अनेवंप्रव्रजन् कारागृहे निवेश्येत ।

अथ जनपदवासानर्हानाह—वानेत्यादि । वानप्रस्थादन्यः प्रव्रजितभावः वैखानसादतिरिक्तः प्रव्रजितावस्थः, अर्थाच्चतुर्थाश्रमी, अस्य राज्ञो जनपदं नोपनिविशेत नाध्यासीत । प्रतिषेधनिमित्तं तु अभिशङ्कनीयशीलत्वमुक्तप्रायम् । सुजातादन्यः सङ्घः सुष्ठु जातात् राजराज्यक्षेमायोत्पन्नात् जनसङ्घाद् अन्यो दुर्जातः जनसङ्घः, अस्य जनपदं नोपनिविशेत । सामुत्थायकादन्यः समयानुबन्धो वा समुत्थायकाः सम्भूयसेतुबन्धादिराजप्रजानुकूलकर्मकारिणः तेषां सम्बन्धी सामुत्थायकः सामुत्थायकात् समयानुबन्धाद् अन्यः राजजनपदद्रोहफलः समयानुबन्धः सङ्केतरचना च, अस्य जनपदं नोपनिविशेत ।

न चेति । तत्र जनपदे, आरामाः विहारार्थाः सर्वजनविनोदस्थानान्युपवनानि, शालाश्च प्रेक्षणीयप्रयोगशालाश्च, न स्युः । आरामशालाप्रतिषेधस्य फलमाह — नटेत्यादि । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा, कर्मविघ्नं कृष्याद्यनुष्ठानविघ्नं न कुर्युः, नाट्यनृत्तगानवादनकथावर्णननर्मक्रियासु स्ववृत्तिषु न चेष्टेरन्निति भावः । कस्मात्, ग्रामाणां निराश्रयत्वाद् नाट्यादिप्रयोगयोग्यशालारहितत्वात् । एवञ्च सिद्धं परमफलमाह —क्षेत्रेत्यादि । पुरुषाणां क्षेत्राभिरतत्वाद् विनोदस्थानाभावेन स्वस्वकर्मस्थानासक्तत्वात्, कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवति कोशस्य, विष्टेः हठकारयितव्यस्य कर्मणः, द्रव्यस्य द्रुभवस्य दार्वादिपदार्थस्य, धान्यस्य, रसस्य तैलेक्षुरसादेश्च वृद्धिः भवति इति एवम्प्रकारं फलम् उन्नेयमित्यर्थः ।

परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देशं परिहरेद् राजा व्ययक्रीडाश्च वारयेत् ॥
दण्डविष्टिकराबाधै रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैर्व्याधिभिश्च पशुव्रजान् ॥
वल्लभैः कार्मिकैः स्तेनैरन्तपालैश्च पीडितम् ।
शोधयेत् पशुसङ्घैश्च क्षीयमाणं वणिक्पथम् ॥
एवं द्रव्यद्विपवनं सेतुबन्धमथाकरान् ।
रक्षेत् पूर्वकृतान् राजा नवांश्चाभिप्रवर्तयेत् ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
प्रथमोऽध्यायः जनपदनिवेशः,
आदितो द्वाविंशः ॥

**परचक्रे**ति । राजा परचक्राटवीग्रस्तं परचक्रं शत्रुकपटः शत्रुसैन्यं वा अटवी तात्स्थ्याद् अटवीपालः ताभ्यां ग्रस्तं, व्याधिदुर्भिक्षपीडितं, देशं परिहरेत् परचक्रादिभ्यो दूरीकुर्यादित्यर्थः । व्ययक्रीडाश्च धनव्ययहेतुभूताः क्रीडाश्च वारयेत् ॥

**दण्डविष्टी**ति । दण्डविष्टिकराबाधैः दण्डविष्टिकराणामतिरेचननिमित्ताभिः पीडाभिः, उपहतां कृषिं रक्षेत्, युक्तदण्डविष्टिकरो भूत्वेत्यार्थम् । स्तेनव्यालविषग्राहैः व्याधिभिश्च उपहतान् पशुव्रजांश्च रक्षेत् स्तेनादिभिरुपघातो यथा न भवेत् तथा पालयेत् ॥

**वल्लभैरित्यादि** । वल्लभैः राजदयितैः, कार्मिकैः राजशुल्काधिकृतैः, स्तेनैः, अन्तपालैः, पशुसङ्घैश्च व्याघ्रादिसङ्घैश्च, पीडितम्, अत एव क्षीयमाणं वणिक्प्रचारवैरस्यात्, वणिक्पथं शोधयेत् रक्षेत् वल्लभादिपीडापरिहारद्वारेण ॥

**एवमित्यादि** । स्पष्टार्थः श्लोकः ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
प्रथमोऽध्यायः जनपदनिवेशः,
आदितो द्वाविंशः ॥

## २०. प्रक. भूमिच्छिद्रविधानम्।

अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत्। प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि, तपोवनानि च तपस्विभ्यो गोरुतपराणि प्रयच्छेत्। तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफलगुल्मगुच्छमकण्टकिद्रुममुत्तानतोयाशयं दान्तमृगचतुष्पदं भग्ननखदंष्ट्रव्यालं मार्गायुकहस्तिहस्तिनीकलभं मृगवनं विहारार्थं राज्ञः कारयेत्।

सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत्।

कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेद्, द्रव्यवनकर्मान्तानटवीश्च द्रव्यवनापाश्रयाः।

---

भूमिच्छिद्रविधानमिति सूत्रम्। भूमिच्छिद्रं सस्याद्युत्पत्त्यनर्हा भूमिः तस्य विधानं सफलत्वसम्पादनप्रकारः उच्यत इति सूत्रार्थः। वणिक्पथप्रचारान् निवेशयेदित्युक्तमधस्तात्, निवेशनस्थानं त्वधुनाभिधीयते।

अकृष्यायामिति। अकृष्यायां भूमौ मालगर्तशैलशर्करिलप्रायतया कृषिराहितायां भूमौ, पशुभ्यो गोमाहिषमेषेभ्यः विवीतानि प्रयच्छेत् तृणजलवन्ति स्थलानि विसृजेत्। प्रदिष्टेत्यादि। किञ्च, प्रदिष्टाभयस्थावरजङ्गमानि दत्ताभयानि स्थावरजङ्गमानि स्थावराणि वृक्षलतादीनि जङ्गमानि सौम्यमृगादीनि च येषु तानि तथाभूतानि, गोरुतपराणि गव्यूतिपरमपरिमाणानि, ब्रह्मसोमारण्यानि वेदाध्ययनसोमयागाद्यनुष्ठानार्थानि वनानि, ब्राह्मणेभ्यः प्रयच्छेत ब्राह्मणसमुदायोपयोगाय विसृजेत्, तपोवनानि च यथोक्तविशेषणानि, तपस्विभ्यः प्रयच्छेत्। तावदिति। तावन्मात्रं गोरुतपरम्, एकद्वारं, खातगुप्तं परिखापरिक्षिप्तं, स्वादुफलगुल्मगुच्छं मनोज्ञफललताप्रतानस्तबकम्, अकण्टकिद्रुमं कण्टकशून्यवृक्षयुक्तम्, उत्तानतोयाशयम् अगम्भीरजलाधारं, दान्तमृगचतुष्पदं दान्ताः मनुष्यपरिचयविश्वस्ता मृगाश्चतुष्पदाश्चान्ये यस्मिंस्तत् तथाभूतं, भग्ननखदंष्ट्रव्यालं भग्ननखदंष्ट्राः उत्कृत्तनखदंष्ट्रा व्याला व्याघ्रादिमृगा यस्मिंस्तत् तथाभूतं, मार्गयुकहस्तिहस्तिनीकलभं मृगयुकर्मयोग्याः करिकरिणीकरिपोताः यस्मिंस्तत् तथाभूतं, मृगवनं, राज्ञः विहारार्थं कारयेत्। मार्गयुकशब्दः आर्हीयठगन्तः। मार्गायुकेति मातृकापाठेषु द्वितीयस्याचो दीर्घत्वं साध्यम्

सर्वेत्यादि। प्रत्यन्ते समीपे, भूमिवशेन वा योग्यभूम्युपलम्भानुसारेण प्रत्यन्ते वा, सर्वातिथिमृगं सर्वे अतिथिमृगा यस्मिन् देशान्तरात्लुब्धकोपद्रुता आगत्य वसन्ति तत् सर्वातिथिमृगं नाम, अन्यद् मृगवनं निवेशयेत्

प्रत्यन्ते हस्तिवनमटव्यारक्षं निवेशयेत् । नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदितपर्यन्तप्रवेशनिष्कसनं नागवनपालैः पालयेत् । हस्तिघातिनं हन्युः । दन्तयुगं स्वयंमृतस्याहरतः सपादचतुष्पणो लाभः ।

नागवनपाला हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखा हस्तिमूत्रपुरीषच्छन्नगन्धा भल्लातकीशाखाप्रतिच्छन्नाः पञ्चभिः सप्तभिर्वा हस्तिबन्धकीभिः सह चरन्तः शय्यास्थानपद्यालण्डकूलपातोद्देशेन हस्तिकुलपर्यग्रं विद्युः ।

---

कुप्येति । कुप्यप्रदिष्टानां कुप्याध्यक्षप्रकरणोक्तानां, द्रव्याणां शाकतिनिशादिसारदारुवर्गस्य उटजाचिमियादिवेणुवर्गस्य मालतीमूर्वादिवल्कवर्गस्य चेत्येतेषाम् एकैकशो वा वनं निवेशयेत् एकैकस्य एकैकं वनं कल्पयेत् । द्रव्यवनकर्मान्तान् अटवीश्च द्रव्यवनसम्बद्धानि कर्माणि वनानि च, द्रव्यवनापाश्रयाः द्रव्यवनोपजीविनः पुरुषाः, निवेशयेयुरिति विपरिणामेन सम्बन्धः विदध्युरित्यर्थः ।

प्रत्यन्ते इति । प्रत्यन्ते जनपदावसानदेशे, हस्तिवनं नागवनम्, अटव्यारक्षम् अटव्या आरक्षाः परिरक्षका यस्मिंस्तत् तथाभूतं, निवेशयेत् । नागवनाध्यक्षः, पार्वतं नादेयं सारसम् आनूपं च पर्वताश्रयं नद्याश्रयं सरोव्यपाश्रयं साम्बुदेशाश्रयं च, नागवनं, विदितपर्यन्तप्रवेशनिष्कसनं विज्ञातपरिसराभिगमनिर्गमं कृत्वा, नागवनपालैः पालयेत् । हस्तिघातिनं शबरपुलिन्दादिं, हन्युः । स्वयंमृतस्य अर्थाद्धस्तिनः, दन्तयुगम्, आहरतः उपनयतः वनेचरजनस्य, सपादचतुष्पणो लाभः पारितोषिकं, देय इति शेषः ।

नागवनेत्यादि । नागवनपालाः, हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखाः हस्तिपक आधोरणः पादपाशिकः पादपाशबन्धनकुशलः सैमिकः सीमाधिकृतः वनचरकः वनवासी पारिकर्मिकः हस्तिपरिचरणचतुरः एतैः सहिताः, हस्तिमूत्रपुरीषच्छन्नगन्धाः हस्तिमूत्रपुरीषगन्धन्यक्कृतगन्धान्तराः, भल्लातकीशाखाप्रतिच्छन्नाः अरुष्कराख्यवृक्षविटपावच्छादिताः, पञ्चभिः सप्तभिर्वा हस्तिबन्धकीभिः सह गजबन्धनशिक्षिताभिर्वशाभिः सह, चरन्तः सन्तः, शय्यास्थानपद्यालण्डकूलपातोद्देशेन शयनावस्थानपदपङ्क्तिविष्ठावप्राघातप्रदेशदर्शनेन, हस्तिकुलपर्यग्रं गजयूथसञ्चारपरमावधिं विद्युः ।

---

1. 'बन्धकी' ख. पाठः.

यूथचरमेकचरं निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बद्ध-मुक्तं च निबन्धेन विद्युः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिनो गृह्णीयुः । हस्तिप्रधानो हि विजयो राज्ञाम् । परानीकव्यूहदुर्ग-स्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्माणो हस्तिन इति ।

कलिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेदिकरूशजाः ।
दाशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ॥
सौराष्ट्रिकाः पाञ्चनदास्तेषां प्रत्यवराः स्मृताः ।
सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
द्वितीयोऽध्यायः भूमिच्छिद्रविधानम्,
आदितस्त्रयोविंशः ॥

यूथेत्यादि । यूथचरं यूथेनैव सह चरति नत्वेकाकी यस्तम्, एकचरम् एक एव चरति नतु यूथेन सह यस्तं, निर्यूथं यूथनिर्गतं, यूथपतिं, व्यालं क्रूरस्वभावं, मत्तं प्रभिन्नं, पोतं दशवर्षकं, बद्धमुक्तं च, हस्तिनं, निबन्धेन विद्युः यूथचरादिहस्तीयत्तादिकं गणनपुस्तके समारोप्य तेन जानीयुरित्यर्थः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिशिक्षाविचक्षणैः प्रमाणभूतैः श्लाघितलक्षणचर्यान् हस्तिनः, गृह्णीयुः, राजार्थे । हि यस्मात् कारणाद्, राज्ञां विजयः शत्रुजयः हस्तिप्रधानः हस्तिमुख्यसाधनकः । हस्तिनां मुख्य-साधनत्वं विशदयितुमाह — परेत्यादि । अतिप्रमाणशरीराः महाप्रमाणदेहाः अत एव प्राणहरकर्माणः, हस्तिनः, परानीकव्यूहदुर्गस्कन्धावारप्रमर्दनाः परेषां शत्रूणां सैन्यविन्यासस्य प्राकारादिदुर्गस्य राजधान्याश्च विध्वंसकाः खलु इतिर्हेतुवचनः गृह्णीयुरित्यनेन सम्बन्धनीयः ।

गजेषूत्तममध्यमाधमान् श्लोकाभ्यामाह — कलिङ्गेत्यादिना सौराष्ट्रिका इत्यादिना च । कलिङ्गाङ्गगजाः कलिङ्गाङ्गदेशोद्भवा गजाः । दाशार्णाः दशार्णदेशभवाः, आपरान्ताः पश्चिमदेशजाः । प्रत्यवराः अधमाः । श्रेष्ठादीनां त्रयाणां वीर्यवेगप्रतापाः क्रियया वर्धन्त इत्याह — सर्वेषामित्यादि ।

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
द्वितीयोऽध्यायः भूमिच्छिद्रविधानम्,
आदितस्त्रयोविंशः ॥

१. 'बन्धमु' क. ग., 'बद्धं मु' ख. पाठः. २. 'ञ्चजनाः' ख. पाठः.

## २१. प्रक. दुर्गविधानम्।

**चतुर्दिशं जनपदान्ते साम्परायिकं दैवकृतं दुर्गं कारयेद्, अन्तर्द्वीपं स्थलं वा निम्नावरुद्धमौदकं, प्रास्तरं गुहां वा पार्वतं, निरुदकस्तम्बमिरिणं वा धान्वनं, खञ्जनोदकं स्तम्बगहनं वा वनदुर्गम्। तेषां नदीपर्वतदुर्गं जनपदारक्षस्थानं, धान्वनवनदुर्गमटवीस्थानम् आपद्यपसारो वा।**

**जनपदमध्ये समुदयस्थानं स्थानीयं निवेशयेद् वास्तुकप्रशस्ते देशे नदीसङ्गमे ह्रदस्य वा अविशोषस्याङ्के सरसस्तटाकस्य वा वृत्तं दीर्घं**

---

**दुर्गविधानमिति** सूत्रम्। दुर्गरचनोच्यत इति सूत्रार्थः। जनपदप्रकृतिरुक्ता, दुर्गप्रकृतिरधुनाभिधीयते।

**चतुर्दिशमिति**। जनपदान्ते, चतुर्दिशं चतसृषु दिशासु व्यापकं, साम्परायिकं युद्धोचितं, दैवकृतं दुर्गं कारयेत् स्वभावविषमस्थलं दुर्गत्वेनाश्रयेत्। किंरूपं तत् कारयेदित्यत्राह — **अन्तरित्यादि**। अन्तर्द्वीपं मध्यगतद्वीपम् अर्थात् समन्तान्नदीपरिवेष्टनमित्येकं, निम्नावरुद्धं स्थलं वा निम्नैः सरोभिः समन्ताद् वेष्टितं स्थलं वेत्यपरम्, औदकं जलपरिवेष्टनदुर्गमत्वादौदकपदव्यपदेश्यं दुर्गम्। प्रास्तरं गुहां वा पर्वतप्रस्तरमयमित्येकं देवखातबिलात्मकं वेत्यपरम्, पार्वतं पर्वतकृतं दुर्गम्। निरुदकस्तम्बम् इरिणं वा जलतृणसङ्घातशून्यमित्येकम् ऊषरं वेत्यपरम्, धान्वनं धन्वकृतं दुर्गम्। खञ्जनोदकं खञ्जनं पङ्किलत्वाद् गतिवैक्लव्यकरमुदकं यस्मिंस्तत् तथाभूतमित्येकं स्तम्बगहनं वा अप्रकाण्डद्रुमदुष्प्रवेशं वेत्यपरं, वनदुर्गं तदाख्यम्। तदेवमौदकाद्येकैकद्वैविध्यादष्टौ दुर्गाणि सिद्धानि। **तेषामिति**। तेषां दुर्गाणां मध्ये, नदीपर्वतदुर्गं नदीदुर्गं पर्वतदुर्गं च, आपदि जनपदारक्षस्थानं जनपदस्य रक्षाहेतुः, भवति, धान्वनवनदुर्गम् अटवीस्थानं धान्वनदुर्गं वनदुर्गं च आटविकरक्षास्थानमापादि, अपसारो वा, आपदि अपसरणस्थानं वा, अर्थाद् राज्ञः॥

दुर्गविधानमुक्त्वा स्थानीयादिकमाह— **जनपदेत्यादि**। जनपदमध्ये, समुदयस्थानं धनोत्पत्तिस्थानभूतं, स्थानीयं महाग्रामादिकं पूर्वोक्तं निवेशयेत्। कीदृशे प्रदेशे, वास्तुकप्रशस्ते वास्तुविद्याभिज्ञनिर्दिष्टे देशे, नदीसङ्गमे नद्युपश्लेषे, अविशोषस्य सदाजलस्य, ह्रदस्य सरसः, तटाकस्य पद्माक-

चतुरश्रं वा वास्तुकवशेन प्रदक्षिणोदकं पण्यपुटभेदनमंसवारिपथाभ्यामुपेतम् । तस्य परिखास्तिस्रो दण्डान्तराः कारयेत् चतुर्दश द्वादश दशेति दण्डान् विस्तीर्णाः विस्तारादवगाधाः पादोनमर्धं वा त्रिभागमूला मूले चतुरश्राः पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा तोयान्तिकीरागन्तुतोयपूर्णा वा सपरिवाहाः पद्मग्राहवतीः ।

चतुर्दण्डावकृष्टं परिखायाः षड्दण्डोच्छ्रितमवरुद्धं तद्द्विगुणविष्कम्भं खाताद् वप्रं कारयेद् ऊर्ध्वचयं मञ्चपृष्ठं कुम्भकुक्षिकं वा हस्तिभि-

---

रस्य वा अङ्के समीपे वा । कीदृशं निवेशयेत्, वास्तुकवशेन वास्तुस्थित्यनुसारेण वृत्तं वर्तुलाकारं, दीर्घं, चतुरश्रं वा, प्रदक्षिणोदकं प्रदक्षिणवाहिसलिलं, पण्यपुटभेदनं पण्यपुटानां पण्यकरण्डानां तत्तत्पण्योत्पत्तिस्थानेभ्यः प्रहितानां भेदनं बन्धविस्रंसनम् अनन्यत्रकार्यतया सङ्केतितं यस्मिंस्तत् तथाभूतम्, अंसवारिपथाभ्यामुपेतं स्थलमार्गजलमार्गाभ्यां गम्यम् । तस्येति । तस्य स्थानीयस्य, तिस्रः प्रथममध्यमतृतीयाः, परिखाः कारयेत्, कीदृशीः, दण्डान्तराः द्विचत्वारिंशदङ्गुल एको हस्त इति गणनया देशकालमानप्रकरणोक्तया चत्वारो हस्ता एको दण्डः दण्डमितम् अन्तरं परस्परव्यवधानं यासां ताः तथोक्ताः, चतुर्दशदण्डान् द्वादशदण्डान् दशदण्डान् इत्येवंक्रमेण विस्तीर्णाः, विस्ताराद् विस्तारपरिमाणात् पादोनं चतुर्भागहीनम्, अर्धं वा, अवगाधाः निम्नाः, तदुभयानुपपत्तावाह — त्रिभागमूला वा विस्तारत्रिभागमानं मूलम् अधस्तलं निम्नत्वं यासां तास्तथाभूताः, मूले चतुरश्राः सम्यग्बद्धाः, पाषाणोपहिताः शिलारचिताः, पाषाणेष्टकाबद्धपार्श्वा वा, तोयान्तिकीः आजलोदयदेशखाताः स्वतः सम्पन्नजला इत्यर्थः, आगन्तुतोयपूर्णा वा नद्याद्यागतजलसम्भृता वा, सपरिवाहा जलनिर्गममार्गोपेताः, पद्मग्राहवतीः नलिननक्रयुक्ताः ।

वप्रविधानमाह — चतुर्दण्डावकृष्टमिति । खाताद् वप्रं कारयेत् परिखातादुद्धृतया मृदा प्राकाराधारभूतं चयं निर्मापयेत् । कथम्भूतं, परिखाया चतुर्दण्डावकृष्टं षोडशहस्तविप्रकृष्टं, षड्दण्डोच्छ्रितं चतुर्विंशतिहस्तोन्नतम् अवरुद्धं मृद्गलनं यथा न भवेत् तथाधस्तात् कृतसंरोधं, तद्द्विगुणविष्कम्भम् उच्छ्रयद्विगुणविस्तारम्, ऊर्ध्वचयम् अधःस्थूलोपरिकृशमूर्ध्वचयाख्यं, मञ्चपृष्ठम् उपर्यधस्ताच्च तुल्यवैपुल्यं मञ्चपृष्ठाख्यं, कुम्भकुक्षिकं वा ऊर्ध्वाधःकृ

**गोभिश्च क्षुण्णं कण्टकिगुल्मविषवल्लीप्रतानवन्तम् । पांसुशेषेण वास्तुच्छिद्रं वा पूरयेत् ।**

**वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्ध्वमोजं युग्मं वा आ चतुर्विंशतिहस्तादिति कारयेत् । रथचर्यासञ्चारं तालमूलमुरजकैः कपिशीर्षकैश्चा[1]चिताग्रं पृथुशिलासंहितं वा शैलं कारयेद्, न त्वेव काष्ठमयम्, अग्निरवहितो हि तस्मिन् वसति ।**

**विष्कम्भचतुरश्रमट्टालकमुत्सेधसमावक्षेपसोपानं कारयेत्, त्रिंशद्दण्डान्तरं च ।**

---

मध्यस्थूलं कुम्भकुक्षिकाख्यं वा, हस्तिभिर्गोभिश्च क्षुण्णं प्रघातदृढीकृतं, कण्टकिगुल्मविषवल्लीप्रतानवन्तं कण्टकवद्भिस्तृणसङ्घातैः विषलताप्रतानैश्च युक्तम् । **पांस्वित्यादि** । पांसुशेषेण वप्रविनियुक्तावशिष्टया मृदा, वास्तुच्छिद्रं नगरवास्तुगर्तं राजवास्तुगर्तं च, पूरयेद्वा पूरयेच्च ।

प्राकारविधानमाह — **वप्रस्येति** । विष्कम्भद्विगुणोत्सेधं स्वविस्तारद्विगुणोच्छ्रयम् । ऐष्टकं पक्वेष्टकचितम् । उत्सेधमानं विशदयन्नाह — द्वादशहस्तादूर्ध्वम् ओजं युग्मं वा त्रयोदशपञ्चदशादिविषमसंख्यहस्तप्रमाणोत्सेधं चतुर्दशषोडशादिसमसंख्यहस्तप्रमाणोत्सेधं वेत्यर्थः । उत्सेधमानस्य परमावधिमाह — आ चतुर्विंशतिहस्तात् चतुर्विंशतिहस्तोत्तमपरिमाणोत्सेधमित्यर्थः । उत्सेधं केचिद् विषमसंख्यमिच्छन्ति समसंख्यमपरे, तत्रान्यतरनिर्बन्धोऽकिञ्चित्कर इत्योजयुग्मोभयोक्त्या सूचयति । इति एवम्प्रकारं, प्राकारं, वप्रस्योपरि कारयेत् । अनुक्तविशेषणकथनपूर्वं प्राकारस्य प्रकारान्तरमाह — **रथेत्यादि** । रथचर्यासञ्चारं रथचर्यया रथगत्या सञ्चारो रथिगतागतं यस्मिंस्तं तथाभूतम् उपरि रथगतागतपर्याप्तविस्तारयुक्तत्वमनेनोक्तं, तालमूलमुरजकैः कपिशीर्षकैश्च आचिताग्रं तालवृक्षमूलप्रतिकृतिभिर्मुरजप्रतिकृतिभिः कपिशीर्षप्रतिकृतिभिश्च शिलेष्टकाचूर्णनिर्मिताभिः समन्विताग्रं, पृथुशिलासंहितं शैलं वा विपुलशिलाबद्धम् ऐष्टकविलक्षणं शिलामयं वा, कारयेद्, अर्थात् प्राकारम् । काष्ठमयं तु प्राकारं, नैव कारयेत् । कुतः, हि यतः, तस्मिन् काष्ठमये, अग्निः अवहितः सन् वसति ।

**विष्कम्भेत्यादि** । अट्टालकं प्राकाराग्रे रणगृहं, कारयेत् । कीदृशं, विष्कम्भचतुरश्रं विस्तारस्यानुरूपम् अर्थादायामे चोत्सेधे च, उत्सेधसमावक्षेपसो-

---

१. 'श्चाराचि' ग. पाठः.

**द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वितलामध्यर्धायामां प्रतोलीं कार-येत् ।**

**अट्टालकप्रतोलीमध्ये त्रिधानुष्काधिष्ठानं सापिधानच्छिद्रफल-कसंहितमितीन्द्रकोशं कारयेत् ।**

**अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायाममनुप्राकारम् अ-हस्तायतं देवपथं कारयेत् ।**

**दण्डान्तरा द्विदण्डान्तरा वाचार्याः कारयेद्, अग्राह्ये देशे प्रध-वितिकां निष्कुहद्वारं च ।**

---

पानम् उत्सेधानुरूपावरोहसोपानं, त्रिंशद्दण्डान्तरं च त्रिंशद्दण्डप्रमाणमिथोऽय-धानं च ।

**द्वयोरिति** । द्वयोरट्टालकयोर्मध्ये, सहर्म्यद्वितलां हर्म्यं धवलगृहमि-त्यातमैष्टकं गृहं तेन तदीयेन च द्वितलेन सहिताम्, अध्यर्धायामां विस्-रात् सार्धगुणपरिमाणदैर्घ्यां, प्रतोलीं गृहविशेषं, कारयेत् ।

**अट्टालकप्रतोलीमध्य इति** । अट्टालकप्रतोल्योर्मध्ये, **इन्द्रकोशं** ख-विशेषं कारयेत् । कथम्भूतं, त्रिधानुष्काधिष्ठानं त्रयाणां धानुष्काणां धनि-स्थितिपर्याप्तं, सापिधानच्छिद्रफलकसंहितं सापिधानानि अवच्छादसाधन-तानि छिद्राणि यस्मिंस्तेन तथाभूतेन फलकेन संहितं कृतसन्धानं च ।

**अन्तरेष्विति** । अनुप्राकारम्, अन्तरेषु अट्टालकप्रतोलीन्द्रकोशानाम-रालेषु, द्विहस्तविष्कम्भं द्विहस्तविस्तारं, पार्श्वे अर्थात् प्राकारस्य, चतुर्गुणाय-अष्टहस्तायतमित्यर्थः, देवपथं देवपथ इव देवपथः रहस्यमार्गः तं, कारये-मातृकायाम् 'अष्टहस्तायतामि'त्यपि पठ्यते । तत्तु पुनरुक्तं द्रष्टव्यम् ।

**दण्डेत्यादि** । दण्डान्तराः दण्डप्रमाणविष्कम्भाः, द्विदण्डान्तरा-चार्याः आरोहावरोहभूमीः कारयेत् । **अग्राह्य इति** । अग्राह्ये ग्रहणायोग्ये प्रधावितिकां प्रतिपक्षैर्बाणे प्रयुज्यमाने तद्गोचरपरिहारेण भटस्य सुखस्थि-नार्थः क्षुद्रो वरणः प्रधावितिका तां, कारयेत्, प्राकारोपरि । निष्कुहद्वा-कोटरविवरं च प्राकारबहिर्वर्तिप्रतिपक्षचेष्टितगूढदर्शनार्थं, कारयेत् प्रधा-कान्तिके ।

**पकोद्धारकनिधातृकप्रतिग्राहकैश्च व्ययं समानयेत् । व्युष्टदेशकालमुखानुवर्तनरूपलक्षणपरिमाणनिक्षेपभाजनगोपायकैश्च नीवीं समानयेत् ।**

**राजार्थे कारणिकस्याप्रतिबध्नतः प्रतिषेधयतो वाज्ञां निबन्धादायव्ययमन्यथा वापि कल्पयतः पूर्वः साहसदण्डः ।**

**क्रमावहीनमुत्क्रममविज्ञातं पुनरुक्तं वा वस्तुकमवलिखतो द्वादशपणो दण्डः ।**

**नीवीमवलिखतो द्विगुणः, भक्षयतोऽष्टगुणः, नाशयतः पञ्चबन्धः प्रतिदानं च । मिथ्यावादे स्तेयदण्डः । पश्चात् प्रतिज्ञाते द्विगुणः प्रस्मृतोत्पन्ने च ।**

---

मुखानि पूर्वोक्तानि, लाभः 'पक्षमाससंवत्सरलाभो लाभ' इति गताध्यायोक्तः कारणं निमित्तं, देयं दानीयद्रव्यं, योगो द्रव्यापद्रव्यमिश्रणं, परिमाणमियत्ता, आज्ञापकः चोदकः, उद्धारकः ऋणग्राही ऋणं वा, निधातृकः भाण्डागारिकः, प्रतिग्राहकः ब्राह्मणादिः । नीवीविधिमाह— **व्युष्टदेशकालमुखानुवर्तनेत्यादि** । तत्र रूपं द्रव्यस्य स्वरूपं, लक्षणं तच्चिह्नं, परिमाणं तन्मानं, निक्षेपभाजनं द्रव्यनिधानभाण्डं, गोपायकस्तद्रक्षः, शेषं प्रतीतम् ।

अथ यथासम्भवं सामान्यदण्डमाह — **राजार्थ** इति । राज्ञो धनहिरण्यादिलाभरूपे प्रयोजने, अप्रतिबध्नतः असम्बध्नतः राजार्थं पुस्तकेष्ववलिखत इत्यर्थः, आज्ञां, प्रतिषेधयतो वा अननुतिष्ठतश्च, आयव्ययं, निबन्धात् क्लृप्तनियमाद्, अन्यथा प्रकारान्तरेण, कल्पयतोऽपि वा, कारणिकस्य पूर्वः साहसदण्डः ।

**क्रमेत्यादि** । वस्तुकं, क्रमावहीनमवलिखतः उत्तममध्यमाधमेषु क्रमहीनं लिखतः, उत्क्रममवलिखतः पूर्वमधमं पश्चादुत्तममिति व्युत्क्रमं लिखतः, अविज्ञातमवलिखतः वेदितुमनर्हया रीत्या लिखतः, पुनरुक्तमवलिखतो वा लिखितं पुनर्लिखतो वा, द्वादशपणो दण्डः ।

**नीवीमिति** । नीवीम्, अवलिखतः अवहीनं लिखतः, द्विगुणः पणचतुर्विंशतिः, दण्डः । नीवीं भक्षयतः, अष्टगुणः पणषण्णवतिः, दण्डः । नीवीं नाशयतः नटनर्तकादिभ्यो दत्त्वा लोपयतः, पञ्चबन्धः पञ्चगुणः षष्टिपणो दण्डः, प्रतिदानं च नाशितपुनर्दानं च, भवति । मिथ्यावादे स्तेयदण्डः असत्यवचने चौर्यदण्डः । पश्चात् प्रतिज्ञाते पूर्वमलिखित एव गणनपरिशोधनायां

**अपराधं सहेताल्पं तुष्येदल्पेऽपि चोदये ।**
**महोपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत् ॥**

**इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे**
**सप्तमोऽध्यायः अक्षपटले गाणनिक्याधिकारः,**
**आदितोऽष्टाविंशः ॥**

विज्ञाते विषये, प्रस्मृतोत्पन्ने च पूर्वं विस्मृत्य पश्चाच्चिन्तिते च विषये, द्विगुणः स्तेयदण्डाद्द्विगुणः, दण्डः ।

श्लोकमाह — **अपराधमिति** । अल्पमपराधं सहेत, अर्थादध्यक्षस्य । अल्पेऽपि उदये आयवृद्धौ अर्थादध्यक्षोपपादितायां, तुष्येत् । महोपकारम् अध्यक्षं, चशब्दस्त्वर्थे, प्रग्रहेण प्रकृष्टग्रहणेन यावज्जीवपरिग्रहेण, अभिपूजयेत् बहुमानयेत् ॥

इति कौटलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
सप्तमोऽध्यायः अक्षपटले गाणनिक्याधिकारः,
आदितोऽष्टाविंशः ॥

२६. प्रक. समुदयस्य युक्तापहृतस्य प्रत्यानयनम् ।

**कोशपूर्वाः सर्वारम्भाः । तस्मात् पूर्वं कोशमवेक्षेत ।**

**प्रचारसमृद्धिश्चरित्रानुग्रहश्चोरग्रहो युक्तप्रतिषेधः सस्यसम्पत् पण्य-बाहुल्यमुपसर्गप्रमोक्षः परिहारक्षयो हिरण्योपायनमिति कोशवृद्धिः ।**

**प्रतिबन्धः प्रयोगो व्यवहारोऽवस्तारः परिहापणमुपभोगः परि-वर्तनमपहारश्चेति कोशक्षयः ।**

**सिद्धीनामसाधनमनवतारणमप्रवेशनं वा प्रतिबन्धः । तत्र दश-बन्धो दण्डः ।**

---

**समुदयस्य युक्तापहृतस्य प्रत्यानयनमिति** सूत्रम् । समुदयो नाम द्रव्योत्पत्तिस्थानेभ्य उत्थितं धनं, युक्ता अध्यक्षाः, युक्तापहृतस्य समुदयस्य प्रत्यानयनं पुनःप्रापणमिहाभिधीयत इति सूत्रार्थः ।

किमर्थं धनसंग्रहे महान् यत्न उपदिश्यत इत्यपेक्षायामाह—**कोशेत्यादि** । सर्वारम्भाः कोशपूर्वाः सर्वाणि कार्याणि तन्त्रसम्बद्धानि जनपदनिवेशादीनि आवापसम्बद्धानि च सन्धिविग्रहादीनि धननिमित्तकानि । तस्मात् कारणात्, कोशं, पूर्वं सर्वकार्याणामग्रे, अवेक्षेत यथा स वृद्धिं प्राप्नुयात् न क्षयं तथा चिन्तयेदित्यर्थः ।

कोशस्योदयहेतून् नव दर्शयति—**प्रचारेत्यादि** । प्रचारसमृद्धिः जनपदसम्पत्, चरित्रानुग्रहः देशजातिकुलाचाराणां पूर्वस्थित्यनतिक्रमेण परि-पालनं, चरित्ररक्षणसन्तुष्टा हि जनाः कोशं राज्ञो वर्धयन्तीति, चोरग्रहः तस्करवधस्तस्करेभ्यो धनग्रहणं च, युक्तप्रतिषेधः युक्तानामध्यक्षाणां प्रतिषेधो धनापहाराद् वारणम् उत्कोचग्रहणनिमित्ताद्वा प्रजापीडनाद् वारणं, सस्य-सम्पत् उच्चावचधान्यसमृद्धिः, पण्यबाहुल्यं पण्यानां जलजानां स्थलजानां च विक्रेयद्रव्याणां बहुलमुत्पत्तिरुपलम्भश्च, उपसर्गप्रमोक्षः अग्न्याद्युपद्रव-मोचनं, परिहारक्षयः करमुक्त्यभावः अवधौ धनग्रहणोपेक्षाविरहो वा, हिरण्यो-पायनं सुवर्णरजतादिरूपोपदा, इति कोशवृद्धिः एवं नव कोशवृद्धिहेतवः ।

कोशक्षयहेतूनष्टावुद्दिशति—**प्रतिबन्ध** इत्यादि ।

**सिद्धीनामिति** । सिद्धीनां सिद्धद्रव्याणां राजग्राह्यकरादीनाम्, असा-धनम् अनुत्पादनम्, उत्पन्नानां वा अनवतारणमहस्तप्रापणम्, अवतारि-तानां वा अप्रवेशनं भाण्डागाराप्रापणम्, इति प्रतिबन्धस्त्रिधा । **तत्रेति** । तत्र प्रतिबन्धे, दशबन्धो दशगुणः, दण्डः ।

**कोशद्रव्याणां वृद्धिप्रयोगः प्रयोगः। पण्यव्यवहारो व्यवहारः । तत्र फलद्विगुणो दण्डः ।**

**सिद्धं कालमप्राप्तं करोत्यप्राप्तं प्राप्तं वेत्यवस्तारः । तत्र पञ्चबन्धो दण्डः ।**

**क्लृप्तमायं परिहापयति व्ययं वा विवर्धयतीति परिहापणम् । तत्र हीनचतुर्गुणो दण्डः ।**

**स्वयमन्यैर्वा राजद्रव्याणामुपभोजनमुपभोगः । तत्र रत्नोपभोगे घातः, सारोपभोगे मध्यमः साहसदण्डः, फल्गुकुप्योपभोगे तच्च तावच्च दण्डः ।**

**राजद्रव्याणामन्यद्रव्येणादानं परिवर्तनं, तद् उपभोगेन व्याख्यातम् ।**

---

**कोशे**त्यादि । कोशद्रव्याणां कोशप्रवेश्यद्रव्याणां, वृद्धिप्रयोगः वृद्ध्यर्थं प्रयोगः स्वयं वृद्धिमुपजीव्य पश्चाद् मूलं कोशेऽर्पयिष्यामीति, स प्रयोगः । पण्यव्यवहारः कोशद्रव्यैर्वाणिज्यकरणं, व्यवहारः । तत्र प्रयोगव्यवहारयोः दण्डः फलद्विगुणः ।

**सिद्धमिति** । सिद्धं प्राप्तं, कालं ग्राह्यद्रव्यग्रहणकालम्, अप्राप्तं, करोति आपादयति उत्कोचलिप्सया, अप्राप्तं वा कालं प्राप्तं करोति प्रद्वेषेण, इत्यवस्तारः इत्यनेन प्रकारेण प्राप्तकालाप्राप्तीकरणमप्राप्तकालप्राप्तीकरणमिति द्विविधोऽवस्तारः । तत्र अवस्तारे, दण्डः पञ्चबन्धः ।

**क्लृप्तमिति** । क्लृप्तं प्रतिनियतम् आयं परिहापयति न्यूनयति, व्ययं वा क्लृप्तं विवर्धयति अतिरेचयति, इति परिहापणम्, एवं द्विधा परिहापणम् । तत्र, दण्डः हीनचतुर्गुणः नाशितद्रव्यचतुर्गुणः ।

रत्नसारफल्गुकुप्यानां राजद्रव्याणां स्वयमुपभोजनं परैर्वोपभोजनमिति द्विविध उपभोग इत्याह — **स्वयमित्यादि** । तत्र दण्डोपदेशवाक्यं — **तत्रे**त्यादि । तच्च उपभुक्तद्रव्यं च । तावच्च तत्परिमाणमपरं च ।

परिवर्तनं व्याचष्टे — **राजद्रव्याणामित्यादि** । अन्यद्रव्येणादानम् अन्यद् द्रव्यं सच्छायं प्रतिनिधाय ग्रहणम् । **उपभोगेन तद् व्याख्यातमिति** उपभोगसमानदण्डं परिवर्तनमित्यर्थः ।

**सिद्धमायं न प्रवेशयति, निबद्धं व्ययं न प्रयच्छति, प्राप्तां नीवीं विप्रतिजानीत इत्यपहारः । तत्र द्वादशगुणो दण्डः ।**

**तेषां हरणोपायाश्चत्वारिंशत्—पूर्वं सिद्धं पश्चादवतारितं, पश्चात् सिद्धं पूर्वमवतारितं, साध्यं न सिद्धम्, असाध्यं सिद्धं, सिद्धमसिद्धं कृतम्, असिद्धं सिद्धं कृतम्, अल्पसिद्धं बहुकृतं, बहुसिद्धमल्पं कृतम्, अन्यत् सिद्धमन्यत् कृतम्, अन्यतः सिद्धमन्यतः कृतं, देयं न दत्तमदेयं**

---

त्रिप्रकारमपहारमाह—**सिद्धमिति** । सिद्धम् उत्पन्नम्, आयं, न प्रवेशयति लेख्ये नारोपयति इत्येकोऽपहारः । निबद्धं पुस्तकारोपितं व्ययं राजाज्ञप्तं पारितोषिकादिलक्षणं, न प्रयच्छति राजनिर्दिष्टाय पात्राय न ददाति, इति द्वितीयोऽपहारः । प्राप्तां हस्तगतां, नीवीं, विप्रतिजानीते नाद्यापि हस्तप्राप्तेत्यपलपति, इति तृतीयोऽपहारः । तत्र अपहारे, दण्डो द्वादशगुणः ।

**तेषामिति** । तेषाम् अध्यक्षाणां, हरणोपायाः राजद्रव्यापहरणद्वाराणि, चत्वारिंशद् वक्ष्यमाणरीत्या । अपहारपरिहरणार्थमपहृतप्रत्यानयनार्थं च तद्व्युत्पादनम् । तान् दर्शयति—**पूर्वं सिद्धमित्यादिना** । **पूर्वं सिद्धं पश्चादवतारितमिति**, पूर्वसस्यत्वात् पूर्वप्रवेश्यः शाल्यादेः करः पश्चिमसस्यगोधूमादिकरेण सह प्रवेशितः स तु मध्यकालेऽध्यक्षेणोपजीव्यो भवति । **पश्चात् सिद्धं पूर्वमवतारितमिति**, पश्चिमसस्यगोधूमादिकरस्य कियांश्चिद् भागः पूर्वसस्यकरेण सह पूर्वमेव प्रवेशित आत्ययिकराजकार्यार्थत्वच्छलात् । **साध्यं न सिद्धमिति**, ग्राह्यः करो न गृहीतो लञ्चादिना राज्ञ एवमाज्ञेति । **असाध्यं सिद्धमिति**, अकरददेवब्राह्मणादेरग्राह्यः करो गूढं गृहीतः । **सिद्धमसिद्धं कृतमिति**, करदेन प्रवेशित एव करः अप्रवेशित इत्युक्त्वापहृतः, गृहीत एव करस्यैकदेशो न गृहीत इत्यपलपितो वा । **असिद्धं सिद्धं कृतमिति**, कृत्स्नकरदानार्हे काले तस्य करस्यार्धं दत्त्वा शेषार्धं पश्चाद् दास्यामीत्युक्तेन लञ्चवशीकृतेनाध्यक्षेण तच्छेषार्धं दत्तत्वेन पुस्तके लिखितम् । **अल्पसिद्धं बहुकृतमिति**, पञ्चाशति प्रविष्टायां शतं प्रविष्टमित्यध्यक्षेण लञ्चग्राहिणा लिखितम् । **बहुसिद्धमल्पं कृतमिति**, शतं गृहीत्वा पञ्चाशदिति पुस्तके लिखितं लञ्चादिना । **अन्यत् सिद्धमन्यत् कृतमिति**, शालिः सिद्धः कोद्रवो लिखितः शालिकरग्रहणनिमित्तस्य लाभस्यात्मसात्कारार्थम् । **अन्यतः सिद्धमन्यतः कृतमिति**, देवदत्ताद् गृहीतं यज्ञदत्ताद् गृहीतमिति पुस्तके लिखितम् । **देयं**

**दत्तं, काले न दत्तमकाले दत्तम्, अल्पं दत्तं बहु कृतं, बहु दत्तमल्पं कृतम्, अन्यद् दत्तमन्यत् कृतम्, अन्यतो दत्तमन्यतः कृतं, प्रविष्टमप्रविष्टं कृतम्, अप्रविष्टं प्रविष्टं कृतं, कुप्यमदत्तमूल्यं प्रविष्टं, दत्तमूल्यं न प्रविष्टं, सङ्क्षेपो विक्षेपः कृतः, विक्षेपः सङ्क्षेपो वा, महार्घमल्पार्घेण परिवर्तितम्, अल्पार्घं महार्घेण वा, समारोपितोऽर्घः, प्रत्यवरोपितो वा,**

---

**न दत्तम् अदेयं दत्तमिति**, देयं स्वर्णरजतादिकं कस्मैचिद् दातव्यतया राज्ञाज्ञापितं तस्मै न दत्तं, किन्तु अदेयं फल्गुकुप्यादिकं कालान्तरे कथञ्चिद् दत्तम्। **काले न दत्तमकाले दत्तमिति**, यज्ञाद्यर्थं कस्मैचिद् दीयतामिति राज्ञाज्ञप्तं यज्ञादिकाले वर्तमाने न दत्तं किन्त्वतिक्रान्ते कथञ्चिद् दत्तं लञ्चग्रहणपीडापुरस्सरम्। **अल्पं दत्तं बहुकृतमिति**, शतं दीयतामिति राजाज्ञायां तत् पञ्चाशतात्मसात्कारार्थया साग्रं पुस्तके विलिखितम्। **बहुदत्तमल्पं कृतमिति**, शतं देवदत्ताय दीयतामिति राजादेशे विंशतिं स्वयं गृहीत्वाशीतिमात्रं तस्मै दत्तम्। **अन्यद् दत्तमन्यत् कृतमिति**, राज्ञादिष्टाः शालयः कोद्रवास्तु दत्ताः। **अन्यतो दत्तमन्यतः कृतमिति**, देवदत्तायादिष्टं यज्ञदत्ताय दत्तम्। **प्रविष्टमप्रविष्टं कृतमिति**, कोशेनिवश्यमुपहास्तितमेव द्रव्यमनुपहस्तितमिति वा किञ्चिदेवोपहस्तितमिति वोक्त्वापहृतम्, अथवा कार्यविशेषार्थे 'प्रजाभ्यो धनमुत्थाप्यानीयतामि'त्यादिष्टे तदुत्थाप्य नाद्याप्युत्थितमित्युक्त्वा कालहरणेनोपजीवितम्। **अप्रविष्टं प्रविष्टं कृतमिति**, अगृहीत एव करदेभ्यः करो लञ्चं गृहीत्वा प्रविष्ट इति लिखितः। **कुप्यमदत्तमूल्यं प्रविष्टमिति**, कुप्यं वस्त्रादिकं राजादेशाद् ऋणेन गृहीतं कथञ्चित् कालान्तरे दत्तमूल्यैकदेशं कृत्वा दत्तसमग्रमूल्यमिति पुस्तके लिखितम्। **दत्तमूल्यं न प्रविष्टमिति**, महामूल्यदानेन क्रीतं कुप्यं तावन्मूल्यक्रीतत्वेन पुस्तकेऽनिबद्धम् अर्थादल्पमूल्यक्रीतत्वेन निबद्धमित्ययं विंशोऽपहारोपायः। **संक्षेपो विक्षेपः कृत इति**, संक्षेपः जनसमूहदेयः पिण्डकरः विक्षेपः कृतः विप्रकीर्णकरः कृतः समूहिभ्यः प्रत्येकं विभज्य ग्राह्यः कृत इत्यर्थः, तथाकरणे हि राजद्रव्यमुपजीवितुं शक्यं ग्राम्यजनाश्चेति। **विक्षेपः संक्षेपो वेति**, जनादेकस्माद् बहुभिर्मासैरल्पशो ग्राह्यो विप्रकीर्णकरः एकस्मिन्नेव समये संपिण्ड्य ग्राह्यः कृतः, एवं हि कुर्वताध्यक्षेण राजद्रव्यमुपजीवितुं लभ्यते जनाश्चेति। **महार्घमल्पार्घेण परिवर्तितमिति**, महार्घं युग्यवाहनादि अल्पार्घेण युग्यादिना विनिमितं विनिमायापहृतम्। **अल्पार्घं महार्घेण वेति**, अल्पमूल्यम् अत एव

**रात्रयः समारोपिताः, प्रत्यवरोपिता वा, संवत्सरो मासविषमः कृतः, मासो दिवसविषमो वा, समागमविषमः, मुखविषमः, धार्मिकविषमः, निर्वर्तनविषमः, पिण्डविषमः, वर्णविषमः, अर्घविषमः, मानविषमः, मापनविषमः, भाजनविषम इति हरणोपायाः ।**

---

महाविक्रयविषयभूतं सामुद्रलवणादि पण्यं महामूल्येन अत एव अल्पविक्रयविषयेण सैन्धवलवणादिना परिवर्तितं विनिमितं, तद्धि शीघ्रविक्रयेण लाभमुत्पादयत् पण्याध्यक्षस्योपजीव्यं भवतीति । **समारोपितोऽर्घ** इति, अर्घस्य यथास्थितादर्घादतिरेचनमित्यर्थः । तथा हि करणे क्रेतारः स्वोपकारकामा भवन्तः पण्याध्यक्षस्यार्घनियामकस्योपजीव्या भवन्तीति । **प्रत्यवरोपितो वेति**, अर्घ इति सम्बध्यते, अर्घप्रत्यवरोपणे हि कृते विक्रेतारः यथास्थितार्घकामा भवन्तः पण्याध्यक्षस्योपजीव्या भवन्तीति । **रात्रयः समारोपिता** इति, पञ्चरात्रवेतनं कर्मकरेभ्यो दत्त्वा सप्तरात्रवेतनं दत्तमित्येवञ्जातीयो रात्रिसमारोपः, अनेन ह्युपायेन कर्मकरेभ्यो धनमपाह्रियते । **प्रत्यवरोपिता वेति**, रात्रय इति वर्तते, स्वामिसकाशाद् दशरात्रव्ययं गृहीत्वाष्टरात्रव्ययो गृहीत इत्येवञ्जातीयं रात्रिप्रत्यवरोपणम्, अनेन ह्युपायेन स्वामिद्रव्यमुपजीव्यते । **संवत्सरो मासविषमः कृत** इति, अधिमासरहित एव संवत्सरः साधिमासः कृत इत्यर्थः, अनेनोपायेनाधिमासलाभोऽपह्रियते । **मासो दिवसविषमो वेति**, अनूनदिवसो मासो दिवसोनः कृतः । **समागमविषम** इति, समागमे विषये विषमो व्यापार इत्यर्थः, तद्यथा समागतानां हृष्टानां कर्मकराणां भक्तवेतनदाने परोक्षं कमपि द्रष्टव्यमपदिश्य स्वयं तद्भक्तवेतनं गृह्णाति । **मुखविषम** इति, कुतश्चिदायमुखादुत्पन्नं द्रव्यमन्यस्मादायमुखादुत्पन्नमिति ख्यापितं तदधिकृतादुत्कोचं गृहीत्वा । **धार्मिकविषम** इति, 'ब्राह्मणेभ्यः प्रत्येकं पणशतं दीयतामि'ति राजादेशे पुरोहितेन पुरोहितपुरुषेण वा तदर्धापहरणम् । **निर्वर्तनविषम इति**, किञ्चित्कर्मनिर्वर्तनप्रवृत्तौ विषमाचरणमित्यर्थः, तद्यथा — करदेभ्यः करोद्ग्राहकर्म निर्वर्तनप्रसङ्गे करदान् 'युष्माभिरद्यैव करो निर्यातयितव्य' इत्यवरुध्य लञ्चग्रहणेन काश्चिन्मुञ्चतीति । **पिण्डविषम इति**, पिण्डे समूहे विषमाचरणं, यथा — समूहदेये विषये समूहिनमेकं लञ्चग्रहणादिना वर्जयित्वा समूहिभ्य इतरेभ्यो देयग्रहणम् । **वर्णविषम** इति, ब्राह्मणा एवाद्योत्तीर्णाः नान्ये इत्युक्त्वा

**तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रिमन्त्रिवैयावृत्यकरानेकैकशोऽनुयुञ्जीत । मिथ्यावादे चैषां युक्तसमो दण्डः । प्रचारे चावघोषयेत् — अमुना प्रकृतेनोपहताः प्रज्ञापयन्त्विति । प्रज्ञापयतो यथोपघातं दापयेत् । अनेकेषु चाभियोगेष्वपव्ययमानः सकृदेव परोक्तः सर्वं भजेत । वैषम्ये सर्वत्रानुयोगं दद्यात् । महत्यर्थापहारे चाल्पेनापि सिद्धः सर्वं भजेत ।**

---

तद्दिवसवेतनस्यात्मसात्करणं नावध्यक्षेण कृतम्, अथवा स्वर्णेऽष्टवर्णके ग्राह्ये नववर्णकं स्वर्णदायकाद् गृहीत्वाष्टवर्णकस्यैव राज्ञेऽर्पणं सुवर्णाध्यक्षेण कृतम् । **अर्धविषम** इति, सेनानिवेशादावर्घस्याव्यवस्थितत्वात् तं किञ्चिदधिकमपदिश्य राजार्थोपजीवनम् । **मानविषम** इति, परिमाणोन्मानसाधनवैषम्यमित्यर्थः, तच्च हीनैस्तैर्देयं दत्त्वा महद्भिर्दत्तमिति ख्यापनम्, अथवा देयस्य हीनैर्दानं महद्भिः स्वीकरणम् । **मापनविषम** इति, मापनकृतं वैषम्यं मातृहस्तविशेषोत्पादितं वस्त्रादिमानविषयं वैषम्यम् । **भाजनविषम** इति, 'आज्यपूर्णं घटशतं दीयतामि'त्युक्ते अल्पानां घटानां शतं दत्त्वा महतां घटानां शतं दत्तमिति लेखनं, तेन राजद्रव्यमपह्रियत इत्ययं चत्वारिंशत्तमो द्रव्यापहरणोपायः । इतिशब्दः परिसमाप्तिवचनः, हरणोपायाः समाप्ताः, किञ्चिद्भेदेन संभवन्तोऽप्यन्ये यथोक्तेष्वेवान्तर्भवन्तीत्यभिप्रायः ।

**तत्रेति** । तत्र हरणोपायेषु शङ्क्यमानेष्विति शेषः, उपयुक्तादीन् अष्टौ एकैकशः प्रत्येकम् , अनुयुञ्जीत पृच्छेद् — 'इदमनेनाध्यक्षेणापहृतं नवे'ति । तत्रोपयुक्तो युक्तानामुपरि नियुक्तः प्रत्यायितपुरुषः, निधायकः भाण्डागारिकः, निबन्धको लेखकः, प्रतिग्राहकः प्रतिग्रहीता, दायकः करदः, दापकः राजपुरुषः, मन्त्री युक्तस्य धीसचिवः, मन्त्रिवैयावृत्यकरः मन्त्रिणः कर्मकरः । **मिथ्येत्यादि** । मिथ्यावादे च, एषाम् उपयुक्तादीनां, युक्तसमः अध्यक्षतुल्यो, दण्डः । प्रचारे च जनपदे च, अवघोषयेत् सपटहताडमवख्यापयेत्, केन प्रकारेण, अमुना प्रकृतेन अध्यक्षेण, उपहताः उत्कोचग्रहणादिना पीडिता जनाः, प्रज्ञापयन्तु आवेदयन्तु स्वां स्वां पीडामित्यार्थम् , इति अनेन प्रकारेण । प्रज्ञापयतः जनस्य, यथोपघातम् उपघातानुरोधेन, दापयेद् द्रव्यम् । **अनेकेष्विति** । अनेकेष्वभियोगेषु उपघातावेदनेष्वनेककृतेषु युगपत् प्राप्तेषु सत्सु, अपव्ययमानः सर्वमुपघातमात्मकृतमनभ्युपगच्छन् युक्तः, सकृदेव परोक्तः

**कृतप्रतिघातावस्थः सूचको निष्पन्नार्थः षष्ठमंशं लभेत, द्वादशमंशं भृतकः। प्रभूताभियोगादल्पनिष्पत्तौ निष्पन्नस्यांशं लभेत। अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत, न चानुग्राह्यः।**

**निष्पत्तौ निक्षिपेद् वादमात्मानं वापवाहयेत्।**
**अभियुक्तोपजापात् तु सूचको वधमाप्नुयात्॥**

**इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे अष्टमोऽध्यायः**
**समुदयस्य युक्तापहृतस्य प्रत्यानयनम्,**
**आदितः एकोनत्रिंशः॥**

---

एकत्राभियोगे एकेनाभियोक्त्रा साक्ष्यादिभिर्विभावितः पराजितः, सर्वं भजत सर्वाभियोगार्थं यथाभागं दद्यात्। **वैषम्य इति।** अनेकेष्वभियोगेष्वेकत्र संप्रतिपत्तिरितरत्र विप्रतिपत्तिश्च वैषम्यं तस्मिन्, सर्वत्रानुयोगं दद्याद् विप्रतिपन्नेषु सर्वेष्वभियोगेषु साक्षिप्रश्नावसरं दद्याद् रागद्वेषादिनिमित्तमिथ्याभियोगशङ्कापनुत्तये। एकाभियोक्तृविषयमाह— **महतीति।** महति अर्थापहारे, प्रभूतस्वर्णरजतादिनानार्थापहारे केनचित् प्रज्ञापिते, अल्पेनापि सिद्धः एकदेशेनापि साक्ष्यादिभिर्विभावितापचारः, सर्वं भजेत अभियोगविषयं कृत्स्नमर्थं दद्याद्, अर्थाद् विप्रतिपद्यमानो युक्तः।

**कृतप्रतिघातेत्यादि।** सूचकः अध्यक्षापचारपिशुनः, कृतप्रतिघातावस्थः कृतः स्वीकृतः प्रतिघातावस्थः प्रतिघातार्थोऽवस्थः अध्यक्षोत्पाद्यानर्थप्रतीकारार्थः प्रतिभूर्येन स तथाभूतः भवेदिति शेषः, यद्यध्यक्षापचारं कश्चित् सूचयेत् स प्रतिघातप्रातिभाव्यं गृहीत्वैव सूचयेदित्यर्थः। स निष्पन्नार्थः सिद्धसूचितार्थः, षष्ठमंशं लभेत, साधिताद् धनात्। **द्वादशमिति।** भृतकः भृत्यः सूचकः, द्वादशमंशं लभेत। **प्रभूतेत्यादि।** बहुप्रकारद्रव्यविषयेऽभियोगे प्रभूताभियोगाद् अभियोगविषयबहुप्रकारद्रव्यमध्याद्, अल्पनिष्पत्तौ अल्पस्यैव साक्ष्यादिभिः संसिद्धौ, निष्पन्नस्यांशं लभेत सूचकः। **अनिष्पन्न इति।** अनिष्पन्ने अभियुक्तेऽर्थे सर्वथैवासंसिद्धे सति, शारीरं हैरण्यं वा दण्डं मिथ्याभियोगनिमित्तं दमं, लभेत, न चानुग्राह्यः न च रक्षणीयः, निर्दोषविसृष्टाध्यक्षप्रभवेभ्योऽनर्थेभ्य इत्यार्थम्।

**निष्पत्ताविति।** निष्पत्तौ सूचितार्थसत्यत्वासिद्धौ, वादम् अभियोगं, निक्षिपेद् विरमयेत् सूचकः, आत्मानं वा अपवाहयेत् आत्मानं चाभियोग-

बन्धान्मोचयेत्, अनिष्पत्तौ वादपरिसमापनमात्ममोचनं वा सूचकेन कर्तुमशक्यमित्यभिप्रायः। भट्टस्वामी तु 'निष्पत्तौ सूचितार्थसंसिद्धौ, निक्षिपेद् अन्यत्र दूष्यादौ सञ्चारयेद्, वादं सूचकस्वापवादम्। आत्मानं वापवाहयेद् अहमेतस्मिन् काले विषयेऽत्र नासमिति प्रख्यापयेद्' इति व्याचष्टे। यदि तु अभियुक्तेनाध्यक्षेण लञ्चोपप्रलोभनाद्युपायैर्भेदं नीतः सूचकः स्वाभियुक्तार्थासाधकं राजान्तिके ब्रूयात्, तदा स वधदण्डमर्हतीत्याह — **अभियुक्ते**त्यादि ॥

इति कौटलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे अष्टमोऽध्यायः
समुदयस्य युक्तापहृतस्य प्रत्यानयनम्,
आदित एकोनत्रिंशः ॥

२७. प्रक. उपयुक्तपरीक्षा।

**अमात्यसम्पदोपेताः सर्वाध्यक्षाः शक्तितः कर्मसु नियोज्याः। कर्मसु चैषां नित्यं परीक्षां कारयेत् चित्तानित्यत्वान्मनुष्याणाम्। अश्वसधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वते।**

**तस्मात् कर्तारं करणं देशं कालं कार्यं प्रक्षेपमुदयं चैषु विद्यात् ते यथासन्देशमसंहता अविगृहीताः कर्माणि कुर्युः, संहता भक्षयेयुः**

उपयुक्तपरीक्षेति सूत्रम्। उपयुक्ता युक्तानामुपरि नियुक्ताः प्रत्ययितपुरुषाः, औपरिका इति ये व्यपदिश्यन्ते, तेषां परीक्षा दोषगवेषणेति सूत्रार्थः। युक्तापहृतप्रत्यानयनोक्त्या गताध्याये युक्तानां परीक्षणीयत्वमवगतं, तत् किमुपयुक्तानामप्यस्ति, उत नेति सन्देहे प्रकरणमिदमारब्धमिति सङ्गतिः।

**अमात्येत्यादि**। अमात्यसम्पदोपेताः 'जानपदोऽभिजात' इत्युक्तजानपदत्वादिगुणसमृद्धियुक्ताः। एतेनार्थोपधाशुद्धियोगमात्रेण नालमिति सूचितम्। सर्वाध्यक्षाः सर्वे अध्यक्षा उपयुक्ता युक्ताश्च, शक्तितः तत्तत्कर्मसामर्थ्यानुसारेण, कर्मसु नियोज्याः। एषां कर्मसु च, परीक्षां दोषगवेषणां नित्यं कारयेत्। अर्थोपधाशुद्धानामेव कर्मसु नियोक्तव्यत्वस्य प्रागभिधानान्नियोगानन्तरं पुनः परीक्षायाः किं कारणं, तत्राह — **मनुष्याणां चित्तानित्यत्वादिति**। मनुष्यचित्तं स्वभावादव्यवस्थितं यतः। स्वाभाविकचित्तानित्यत्वमुक्त्वावस्थाविशेषभवमाह— **अश्वेत्यादि**। यथाहि अश्वा रथवहनकर्मानियोगदशायां साधुशीला एव सन्तस्तन्नियोगदशायां विकारं प्राप्नुवन्ति, एवं कर्मसु अनियोगदशायां सुशीला एव परिदृष्टाः नियोगदशायां शीलवैकृतं प्राप्नुवन्तीत्यर्थः।

**तस्मादिति**। तस्मात् यथोक्तात् कारणात्, कर्तारम् अध्यक्षं, करणं धर्माद्यधिकरणम् अनुष्ठानं वा, देशं स्थानीयादिकं, कालम् अहोरात्रादिं दुर्भिक्षकालादिं वा, कार्यं करणीयं, प्रक्षेपं कर्मकरभृतिम्, उदयं लाभं च, एषु अध्यक्षेषु विषये, विद्यात्। ते अध्यक्षाः, यथासन्देशं स्वाम्यादेशानतिक्रमेण, असंहता अकृतान्योन्यसङ्केताः, अविगृहीताः अकृतान्योन्यविरोधाः, कर्माणि कुर्युः। संहतिविग्रहयोर्दोषमाह — **संहता इत्यादि**। कर्माणीत्यनुवर्तते। कर्माणि भक्षयेयुः कर्मफलान्यपहरेयुः। कर्माणि विनाशयेयुः निष्फलीकुर्युः।

**विगृहीता विनाशयेयुः। न चानिवेद्य भर्तुः किञ्चिदारम्भं कुर्युरन्यत्रापत्प्रतीकारेभ्यः। प्रमादस्थानेषु चैषामत्ययं स्थापयेद् दिवसवेतनव्ययद्विगुणम्।**

**यश्चैषां यथादिष्टमर्थं सविशेषं वा करोति स स्थानमानौ लभेत।**

**अल्पायतिश्चेन्महाव्ययो भक्षयति। विपर्यये यथायतिव्ययश्च न भक्षयति इत्याचार्याः। अपसर्पेणैवोपलभ्यते इति कौटल्यः।**

---

स्वामिनमपृष्ट्वा न कमपि कर्मविशेषमग्निजलादिनिमित्तविपत्प्रतीकारातिरेकेण कुर्युरित्याह—**न चानिवेद्ये**त्यादि। **प्रमादे**त्यादि। एषाम् अध्यक्षाणां, **प्रमादस्थानेषु** स्त्रीमद्यादिव्यसनेषु दृष्टेषु, अत्ययं दण्डं, स्थापयेत् सद्य एव प्रयुञ्जीत। कियन्तं स्थापयेत्, दिवसवेतनव्ययद्विगुणं दिवसवेतनस्य प्रमाददिवससम्बन्धिनोऽध्यक्षवेतनस्य दिवसव्ययस्य प्रमादनिमित्तकृतद्दिवसकर्मादर्शनजन्यस्यार्थनाशस्य च द्विगुणम्।

**यश्चैषामि**ति। एषाम् अध्यक्षाणां मध्ये, यः, अर्थं राजकार्यं, **यथादिष्टं** करोति स्वाम्युपदिष्टप्रकारकं निष्पादयति, सविशेषं वा करोति आदिष्टाभ्यधिकगुणयुक्तं वा निष्पादयति, सः, स्थानमानौ लभेत प्रकृष्टं पदान्तरं पूजां च प्राप्नुयात्।

राजार्थजानपदार्थग्रसनाग्रसनोपलम्भेऽभ्युपायाकाङ्क्षायां व्ययमहत्त्वाल्पत्वसमत्वलिङ्गकमनुमानमाचार्या अभ्युपायं मन्यन्त इत्याह—**अल्पे**त्यादि। **अल्पायति**रल्पधनागमः, महाव्ययश्चेद् अनल्पार्थोपभोगो यदि भवेत्, तदा सः भक्षयति राजप्रजार्थमुपजीवति। विपर्यये यथायतिव्ययश्च महायतित्वे सत्यल्पव्यय आयत्यनुरूपव्ययश्च, न भक्षयति। इत्याचार्याः। स्वमतमाह—**अपसर्पेणैवे**ति अपसर्पेणैवोपलभ्यते चारद्वारेणैव दुष्टादुष्टत्वमध्यक्षाणां निश्चीयते 'त्रयाणामेकवाक्ये संप्रत्यय' इति गूढपुरुषप्रणिध्युक्तादिशेत्यर्थः। एवकारेण महाव्ययत्वाल्पव्ययत्वयोरुपलब्ध्युपायत्वं व्यवच्छिद्यते। ते ह्यल्पायतेरपि महाकुटुम्बिन उद्धारग्रहणेन महाव्ययत्वदर्शनात् प्रभूतराजप्रजाद्रव्यापहारिणोऽपि सहजकृपणतयाल्पव्ययत्वदर्शनाच्च व्यभिचरिते इत्यभिप्रायः।

यः समुदयं परिहापयति स राजार्थं भक्षयति। स चेदज्ञाना-दिभिः परिहापयति तदेनं यथागुणं दापयेत्।

यः समुदयं द्विगुणमुद्भावयति स जनपदं भक्षयति। स चेद्राजार्थमुपनयत्यल्पापराधे वारयितव्यः, महति यथापराधं दण्डयितव्यः।

यः समुदयं व्ययमुपनयति स पुरुषकर्माणि भक्षयति। स कर्म-दिवसद्रव्यमूल्यपुरुषवेतनापहारेषु यथापराधं दण्डयितव्यः।

---

यः समुदयमिति। यः, समुदयं द्रव्योत्पत्तिं, परिहापयति न्यूनयति, स राजार्थं भक्षयति। सः, अज्ञानादिभिः अज्ञानालस्यभयप्रमादकामकोपदर्प-लोभैर्गाणनिक्याधिकारोक्तैः, परिहापयति चेद्, एनं, तद् हापितं द्रव्यं, यथा-गुणं द्विगुणं त्रिगुणम् अधिकगुणं वा अपराधानुसारिगुणं, दापयेत्।

यः समुदयं द्विगुणमिति। यः समुदयं, द्विगुणं क्लृप्तादधिकम्, उद्भावयति, सः, जनपदं भक्षयति कथमन्यथा समुदयाधिक्यमिति। सः, राजार्थम् उपनयति चेत् स्वोद्भावितमधिकं साकल्येन राज्ञेऽर्पयति चेत्, तर्हि, अल्पापराधे अल्पेऽपराधे जनपदपीडने, वारयितव्यः 'मा पुनरेवं जानपदेभ्यः क्लृप्ताधिकमुद्भावये'ति प्रतिषेद्धव्यः। महति द्विगुणत्रिगुणाद्युद्भावनरूपे कोश-क्षयफलकजनपदकर्शनहेतावपराधे स्वयमपहरणरूपे च, यथापराधं दण्डयि-तव्यः। यदुक्तं —

"यथान्नकर्शनात् प्राणाः क्षीयन्ते सर्वदेहिनाम्।
तथा कोशा नरेन्द्राणां क्षीयन्ते राष्ट्रकर्शनात्॥" इति।

यः समुदयं व्ययमिति। यः, व्ययं कर्मार्थव्ययाय क्लृप्तं धनं, समुदयम् उपनयति समुदये प्रवेशयति व्ययितमकृत्वेत्यार्थं, सः, पुरुषक-र्माणि भक्षयति पुरुषान् कर्मकरान् कर्माणि च नाशयति कर्माननुष्ठापनेन। तस्य दण्डमाह — स इति। सः, कर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु कर्मार्थदिवसस्य यद् द्रव्यं तद्दिवसकर्मसाध्यं फलं तस्य मूल्यं कल्पितः कश्चिदर्घः कर्मदिवसद्रव्यमूल्यं पुरुषवेतनं पुरुषाणां कर्मकराणां वेतनं कर्मदिव-सद्रव्यमूल्यस्य पुरुषवेतनस्य च अपहारेषु विनाशनेषु, यथापराधम् अपराधानु-सारेण दण्डयितव्यः कर्मदिवसद्रव्यमूल्यं कर्मकरपुरुषवेतनं च यावत् कर्मा-करणेन हापितं तावद् दापयितव्य इत्यभिप्रायः।

**तस्मादस्य यो यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यमायव्ययौ च व्याससमासाभ्यामाचक्षीत ।**

**मूलहरतादात्विककदर्यांश्च प्रतिषेधयेत् । यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः । यो यद्यदुत्पद्यते तत्तद् भक्षयति स तादात्विकः । यो भृत्यात्मपीडाभ्यामुपचिनोत्यर्थं स कदर्यः । स पक्षवांश्चेदनादेयः, विपर्यये पर्यादातव्यः ।**

**यो महत्यर्थसमुदये स्थितः कदर्यः सन्निधत्ते, अवनिधत्ते, अवस्रावयति वा — सन्निधत्ते स्ववेश्मनि, अवनिधत्ते पौरजानपदेषु, अवस्रावयति परविषये — तस्य सत्री मन्त्रिमित्रभृत्यबन्धुपक्षमागतिं गतिं च द्रव्याणामुपलभेत ।**

---

**तस्मादिति** । तस्मात् समुदयविषयेऽपराधे दण्डविधानात्, योऽध्यक्षः, यस्मिन्नधिकरणे, शासनस्थो नियुक्तः, सः, तस्य कर्मणः तदधिकरणसम्बद्धस्य कर्मणः, याथातथ्यं यथास्थितिम्, आयव्ययौ च, व्याससमासाभ्यां संक्षेपविस्ताराभ्याम्, अस्य राज्ञः, आचक्षीत निवेदयेत् ।

**मूलहरेत्यादि** । मूलहरतादात्विककदर्यान् प्रतिषेधयेत् मूलहरणादिकर्मणो वारयेत् । के पुनर्मूलहरादय इत्यत्राह—**यः पितृपैतामहमिति** । यः, पितृपैतामहं पितृपितामहार्जितम्, अर्थम्, अन्यायेन भक्षयति दुर्विनियोगेन नाशयति, स मूलहरः । यद्यदुत्पद्यते प्रत्यहं लभ्यते, तत्तद् यः, भक्षयति दुर्विनियोगेन नाशयति, स तादात्विकः । यः भृत्यात्मपीडाभ्याम् अर्थम्, उपचिनोति वर्धयति, स कदर्यः । प्रतिषेधानन्तरमपि मूलहरणाद्यनुवृत्तावाह—**स इति** । सः मूलहराद्यन्यतमः, पक्षवांश्चेत् पक्षो बन्धुसम्पत् तद्वान् यदि, अनादेयः अग्राह्यः तद्बन्धुकोपपरिहारार्थमगृहीतधन एव स्थानादवरोपणीय इत्यर्थः । विपर्यये पक्षवत्त्वाभावे, पर्यादातव्यः सर्वस्वं हर्तव्य इत्यर्थः ।

**यो महतीति** । यः कदर्यः महति अर्थसमुदये स्थितः सन्, सन्निधत्ते अवनिधत्ते अवस्रावयति वा, तत्र सन्निधानावनिधानावस्रावणानि विवृणोति—स्ववेश्मनि सन्निधत्ते भूगर्तस्तम्भकोटरादिषु स्थापयति, पौरजानपदेषु अवनिधत्ते रक्षणार्थं निक्षिपति, परविषये अवस्रावयति शत्रुजनपदे धनसञ्चारणं करोति, तस्य अध्यक्षस्य, मन्त्रिमित्रभृत्यबन्धुपक्षं मन्त्र्यादिचतुष्टयबलं, द्रव्याणामागतिं गतिं च, सत्री गूढपुरुषप्रणिध्युक्तलक्षणः, उपलभेत ।

**यश्चास्य परविषये सञ्चारं कुर्यात् तमनुप्रविश्य मन्त्रं विद्यात्। सुविदिते शत्रुशासनापदेशेनैनं घातयेत् ।**

**तस्मादस्याध्यक्षाः सङ्ख्यायकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कर्माणि कुर्युः ।**

**उत्तराध्यक्षा हस्त्यश्वरथारोहाः। तेषामन्तेवासिनः शिल्पशौचयुक्ताः सङ्ख्यायकादीनामपसर्पाः ।**

**बहुमुख्यमनित्यं चाधिकरणं स्थापयेत् ।**

**यश्चेति** । यश्च परविषये, अस्य कदर्यस्य, सञ्चारं द्रव्यसञ्चारणं कुर्यात्, तम्, अनुप्रविश्य अनुकूलतया प्रविश्य तन्मित्रं तद्भृत्यो वा भूत्वेत्यर्थः, मन्त्रं विद्यात् अभिसन्धिरहस्यं जानीयात् सत्री । **सुविदित इति** । सुविदिते सत्रिद्वारेण सम्यग् विज्ञाते मन्त्रे, एनं कदर्यं, शत्रुशासनापदेशेन घातयेत् शत्रुणा कदर्यमभिसम्बुध्य प्रहितं 'प्रेषितोऽर्थः प्रतीष्टः, अवशिष्टः क्षिप्रं प्रेष्यतामि'ति लिखितवृत्तान्तं किमपि लेख्यं शत्रुविषयागतजनहस्तादन्तपालेन गृहीतोपनीतमित्येवं कूटसृष्टस्यैव शत्रुशासनस्य अपदेशेन प्रख्यापनेन हतं कारयेत् ।

**तस्मादिति** । तस्माद् राजद्रव्यापहारे यथोक्तदण्डविधानात्, अध्यक्षाः, अस्य राज्ञः, कर्माणि धनसम्बद्धानि कार्याणि, संख्यायकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कुर्युः संख्यायकादिसाक्षिकाः सन्तः कुर्युः । संख्यायकाः गणकाः, लेखकाः प्रसिद्धाः, रूपदर्शकाः निष्कदीनारादिरूपपरिशोधकाः, नीवीग्राहकाः व्ययितशिष्टधनग्रहणाधिकृताः, उत्तराध्यक्षा औपरिकाः ।

के पुनरुत्तराध्यक्षाः कर्तव्या इत्यत्राह — **उत्तरेत्यादि** । हस्त्यश्वरथारोहाः हस्त्यारोहा अश्वारोहा रथारोहाश्च वृद्धभावादिना युद्धाक्षमत्वं प्रतिपन्नाः, उत्तराध्यक्षाः कर्तव्याः । **तेषामिति** । तेषाम् उत्तराध्यक्षाणां, शिल्पशौचयुक्ता अन्तेवासिनः शिल्पं नियोगानुष्ठानकौशलं शौचं स्वकृत्याविसंवादनं ताभ्यामुपेताः शिष्याः, संख्यायकादीनामपसर्पाः संख्यायकलेखकादिप्रवृत्त्युपलम्भार्था गूढपुरुषाः कर्तव्याः ।

**बह्वित्यादि** । अधिकरणं युक्तकर्मस्थानं, बहुमुख्यं स्थापयेत् बहवो मुख्याः प्रधाना यस्मिंस्तत् तथाभूतं कुर्यात्, बहवश्चेत् प्रधानास्तेऽन्योन्यशङ्किता राजाद्यर्थं नापहरन्तीति। अनित्यं च स्थापयेत् अनित्यं न विद्यते नित्यः

यथा ह्यनास्वादयितुं न शक्यं
जिह्वातलस्थं मधु वा विषं वा ।
अर्थस्तथा ह्यर्थचरेण राज्ञः
स्वल्पोऽप्यनास्वादयितुं न शक्यः ॥
मत्स्या यथान्तस्सलिले चरन्तो
ज्ञातुं न शक्याः सलिलं पिबन्तः ।
युक्तास्तथा कार्यविधौ नियुक्ता
ज्ञातुं न शक्या धनमाददानाः ॥
अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् ।
नतु प्रच्छन्नभावानां युक्तानां चरतां गतिः ॥
आस्रावयेच्चोपचितान् विपर्यस्येच्च कर्मसु ।
यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा ॥

---

स्थिरश्चिरस्थायी युक्तो यस्मिंस्तत् तथाभूतं च कुर्यात् । नित्यो हि युक्तश्चिर-संवाससुलभां मित्रसम्पदमवष्टभ्यात्मदोषान् निह्नुवीत, जानपदाश्च तस्य दोषान् कालान्तरात्मापकारभिया नाविष्कुर्युरिति ।

अध्यायान्ते श्लोकानाह — **यथाहीत्यादि** । अनास्वादयितुं न शक्यम् अर्थादास्वादनपरिहारमिच्छतापि । अशक्यत्वोपपादकमाह — **जिह्वातल-स्थमिति** । विनापि पुरुषयत्नेन तदुदरप्रवेशं यद्देशसन्निकर्षे लभेत तद्देश-नित्यसन्निहितमित्यर्थः । **अर्थ** इति । योऽत्यल्पत्वाद् भक्षितविज्ञातोऽप्यन-र्थापर्यवसायी मधुस्थानीयो, यश्च महत्त्वाद् वधदण्डान्तपरमानर्थपर्यवसायी विषस्थानीयः, स उभयविधोऽपि । अर्थचरः अर्थेषु व्याप्रियमाणोऽध्यक्षः । तदेवमर्थभक्षणस्याध्यक्षदुष्परिहरत्वमनेनोक्तम् ॥

कृतमप्यध्यक्षैरर्थभक्षणं जलचरमत्स्यजलपानवद् गगनचरपक्षिगतिवच्च स्वामिना दुरवबोधमिति श्लोकद्वयेनाह — **मत्स्या यथान्तरिति, अपि शक्या गतिरिति** च ॥

अत एतेषु राजा किं कुर्यात्, तत्राह— **आस्रावयेदिति** । **उपचि-तान्** अर्थभक्षणसमृद्धान् अध्यक्षान्, आस्रावयेद् भक्षितमर्थमाहारयेद् उप-चयरूपेण लिङ्गेनापसर्पाद्युपायेन च तदपचारमवगम्येत्यार्थम् । **कर्मसु विपर्य-स्येत्** व्यत्ययेन निवेशयेद् उच्चकर्मस्थानेभ्योऽवरोप्य नीचकर्मस्थानेषु नियु-

**न भक्षयन्ति ये त्वर्थान् न्यायतो वर्धयन्ति च।**
**नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः ॥**

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
**नवमोऽध्यायः उपयुक्तपरीक्षा,**
**आदितस्त्रिंशः ॥**

ज्ञीतेत्यर्थः। आस्रावणविपर्यसनभयाच्चाध्यक्षा अर्थभक्षणे न प्रवर्तन्ते, भक्षितं चार्थं प्रत्याहरन्तीत्यभिप्रायेणाह —**यथेत्यादि**। तथा आस्रावयेदित्येवं पूर्वार्धेन सम्बन्धः। सोऽयमर्थभक्षकविषयो विधिः प्रपञ्चितः ॥

ये पुनरर्थचरा अपि सन्तो महान्तं यत्नमास्थाय राजजानपदार्थं न भक्षयन्ति, प्रत्युत न्यायतः परिवर्धयन्ति, तथाविधा राजप्रियहितानुष्ठानपराः स्थिराधिकाराः कर्तव्या इत्याह — **न भक्षयन्तीत्यादि** ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
नवमोऽध्यायः उपयुक्तपरीक्षा,
आदितस्त्रिंशः ॥

## २८. प्रक. शासनाधिकारः ।

**शासने शासनमित्याचक्षते । शासनप्रधाना हि राजानः, तन्मूलत्वात् सन्धिविग्रहयोः ।**

**तस्मादमात्यसम्पदोपेतः सर्वसमयविदाशुग्रन्थश्चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात् । सोऽव्यग्रमना राज्ञः सन्देशं श्रुत्वा**

---

**शासनाधिकार** इति सूत्रम् ' शासनं नाम लिखितकार्यार्थं तालपत्रादि, तस्याधिकारो विधिरुच्यत इति सूत्रार्थः । 'अर्धगुणहीनः शासनहरः' इति शासनं यत् सूचितं दूतप्रणिधौ तदिह निरूप्यत इति प्रकृतिः ।

किं तच्छासनमित्याह—**शासने शासनमित्याचक्षत** इति । पत्रारूढोऽर्थः शासनं तस्मिन् शासनमिति व्यपदेशं कुर्वन्त्याचार्याः, नतु सन्दिष्टेऽर्थे वाचिकाख्ये इत्यर्थः । कुतः पुनः शासनवाचिकयोर्मध्ये शासनस्य निरूपणादरो नतु वाचिकस्येत्याकाङ्क्षायामाह — **शासने**त्यादि । सन्धिविग्रहयोरिति षाड्गुण्योपलक्षणम् । तेनायमर्थः— हि यस्माच्छासनमेव राज्ञां मन्त्रगुप्तिपुरस्सरषाड्गुण्यव्यापाराव्यभिचारनिर्वाहकतया प्रधानं, वाचिकं तु सन्देशहरगतप्रमादादिदोषसम्भावितमन्त्रभेदतया व्यभिचारित्वान्न प्रधानमिति ।

शासनस्य प्रधानत्वाद् विशिष्टगुण एव तल्लेखको भवितुमर्हतीत्याह — **तस्मादि**त्यादि । तस्माद्, अमात्यसम्पदोपेतः 'जानपदोऽभिजात' इति मन्त्रिपुरोहितोत्पत्तिप्रकरणोक्ताः पञ्चविंशतिर्जानपदत्वादयो गुणा अमात्यसम्पत् तया युक्तः, सर्वसमयवित् सर्वेषां वर्णानाम् आश्रमाणां वर्णातिरिक्तानां चाचाराभिज्ञः, आशुग्रन्थः शीघ्रवाक्यसन्दर्भप्रसरः, चार्वक्षरः चारूणि एकैकशः समुदायतश्च दर्शनीयान्यक्षराणि लिपयो यस्य सः, लेखवाचनसमर्थः लेखस्य स्फुटसुस्वरयथास्थानवाक्यविश्रमसुभगपठनप्रवीणः, लेखस्याप्रकाश्यार्थस्य संज्ञालेखस्य वर्जिताक्षरस्य पदवाक्यसंकेतितलेखाविशेषात्मकस्य वाचने व्यवहारे समर्थ इत्यपरे । एवमेकोनत्रिंशता गुणैर्युक्तो लेखकः स्यात् । स च लेखको राज्ञोच्यमानं वाचिकमनाकुलेन मनसा श्रुत्वार्थान् पौर्वापर्यक्रमेण परलेखार्थानुगुण्यानानुगुण्याभ्यां च निश्चित्य लेखं लिखेदित्याह— **सोऽव्यग्रे**त्यादि । तत्र युक्तानामव्यग्रमनस्कता राजसत्काराद् भवति । यदाहुः —

"नीचापि बुद्धिर्नृपमानयोगाच्छ्रेष्ठत्वमायाति तदाश्रितानाम् ।
अग्र्यापि निर्वाति हि मानहीना स्नेहं विना दीपशिखेव तूर्णम् ॥"

**निश्चितार्थं लेखं विदध्याद्, देशैश्वर्यवंशनामधेयोपचारमीश्वरस्य, देश नामधेयोपचारमनीश्वरस्य ।**

**जातिं कुलं स्थानवयश्श्रुतानि कर्मर्द्धिशीलान्यथ देशकालौ ।**
**यौनानुबन्धं च समीक्ष्य कार्ये लेखं विदध्यात् पुरुषानुरूपम् ॥**

---

इति । परलेखानुरूप्यानानुरूप्यानिश्चयविषयेऽपि श्लोकमुदाहरन्ति —

"श्रुत्वा नरेन्द्रवाक्यं परभावं चावधार्य परलेखात् ।
लेखः खलु कर्तव्यो गुणदोषविनिश्चयज्ञेन ॥"

इति । कीदृशं विदध्यात्, ईश्वरस्य राज्ञः, देशैश्वर्यवंशनामधेयोपचारं देशादीनां चतुर्णामुपचारो यस्मिंस्तं तथाभूतम् । तत्र देशोपचारोऽध्युष्यमाणदेशनिर्देशेनोपचारः, यथा — मध्यदेशमलङ्कुर्वाणमिति । ऐश्वर्योपचारः भूकोशदण्डसम्पन्निर्देशोपचारः 'मध्यदेशाधिपतिमसंख्याताप्रतिहतदण्डक्षपितरिपुपक्षम्' इत्येवञ्जातीयः । वंशोपचारः 'सोमान्वयभूषणम्' इत्येवम्प्रकारः । नामधेयोपचारः 'महाराजाधिराजश्रीसिंहवर्मदेवम्' इत्येवञ्जातीयः । अनीश्वरस्य अमात्यादेः, देशनामधेयोपचारं देशोपचारनामोपचारयुक्तम् । तत्र देशोपचारः 'कान्यकुब्जमलङ्कुर्वाणम्' इत्यादिः । नामोपचारः 'श्रीसोमदत्तमि'त्यादिः ।

जातिकुलाद्येकादशकमपि लेखविधौ समीक्षणीयमित्याह — **जातिमित्यादि** । तत्र जातिर्ब्राह्मणादिः । तत्समीक्षा च ब्राह्मणो ब्राह्मणस्य ज्यायसोऽभिवादपूर्वं कनीयस आशीर्वचनपूर्वं क्षत्रियस्य स्वस्त्यादिपदपूर्वं, क्षत्रियादिब्राह्मणस्य प्रणामपूर्वमित्येवञ्जातीया । कुलम् अन्ववायो भोजादिः । स्थानमधिकारः सान्धिविग्रहिकादिः । वयो यौवनादि । श्रुतं शास्त्रविज्ञानम् । कर्म वृत्तिः । ऋद्धिर्धनसम्पत् । शीलं सदाचारः । देशो वासस्थानम् । कालः तदात्वमायतिश्च । यौनानुबन्धो विवाहसम्बन्धः । इदं जात्याद्येकादशकं, समीक्ष्य पर्यालोच्य, कार्ये कार्यविषये, पुरुषानुरूपं पुरुषाणां हीनमध्यमोत्तमानां यथाक्रममाज्ञापनबोधनविज्ञापनाद्युक्तिप्रकारैरनुरूपं लेखं विदध्यात् । श्लोकं चात्रोदाहरन्ति —

"वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥" इति ।

अर्थक्रमः, सम्बन्धः, परिपूर्णता, माधुर्यमौदार्यं, स्पष्टत्वमिति लेखसम्पत् ।

तत्र यथावदनुपूर्वक्रिया प्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थस्य क्रमः ।

प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानमा समाप्तेरिति सम्बन्धः ।

अर्थपदाक्षराणामन्यूनानतिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाश्रान्तपदतेति परिपूर्णता ।

---

लेखसम्पदमाह — अर्थक्रम इत्यादि ।

अर्थक्रमादीन् षड् लेखगुणान् स्वयमेव व्याचष्टे — तत्रेत्यादि । तत्र अर्थक्रमादीनां मध्ये । यथावदनुपूर्वक्रिया यथार्हं क्रमकरणम् । तदेव स्फुटप्रतिपत्तये विवृणोति — प्रधानस्यार्थस्य पूर्वमभिनिवेश इति । अभ्यर्हितस्यार्थस्य पूर्वं लेखनं पश्चादन्यस्येत्ययमर्थक्रमो नाम लेखगुणः ।

सम्बन्धमाह —प्रस्तुतस्येति । प्रस्तुतस्य प्रक्रान्तस्य, अर्थस्य, अनुपरोधाद् अबाधात्, उत्तरस्यार्थस्य, आ समाप्तेर्विधानम् आ लेखपरिसमापनालेखनं पूर्वपूर्वलिखितार्थाविरोधेनोत्तरोत्तरार्थलेखनमिति यावत्, इत्ययं सम्बन्धाख्यो गुणः ।

परिपूर्णतामाह — अर्थेत्यादि । अर्थपदाक्षराणामन्यूनानतिरिक्तता अर्थस्य पदानामक्षराणां चान्यूनतानतिरिक्तता च । अर्थन्यूनता यथा — 'हस्तिनौ प्रयच्छे'त्युक्ते हस्तिनं प्रयच्छेति लेखनम् । इहार्थमात्रं न्यूनं पदाक्षराणि तु न न्यूनानि न चातिरिक्तानि । 'हस्तिनं प्रयच्छे'त्युक्ते हस्तिनौ प्रयच्छेति लेखनेऽर्थातिरिक्तता पदाक्षराणि तु तावन्त्येव । पदन्यूनता यथा — 'कालिङ्गं हस्तिनं प्रयच्छे'त्युक्ते विशेषणपरित्यागेन 'हस्तिनं प्रयच्छे'ति लेखनं, 'हस्तिनं प्रयच्छे'ति निर्विशेषणोक्तौ सविशेषणलेखनं पदाधिकता । अक्षरन्यूनता यथा — सलिलशब्दोक्तौ वारिशब्दलेखनं, तद्वैपरीत्यलेखनेऽक्षराधिकता । हेतूदाहरणदृष्टान्तैरर्थोपवर्णना हेतुः कारणम् उदाहरणं शास्त्रसंवादाभिधानं दृष्टान्तो लोकसिद्धार्थनिदर्शनं हेत्वादिभिस्त्रिभिरर्थस्य प्रस्तुतस्य उपवर्णना सम्प्रतिपत्तिसम्पादनम् । अश्रान्तपदता वाक्यार्थे पदवचनं, यथा 'सन्धिं कुरु' इति पदसमूहप्रतिपाद्यस्यार्थस्य 'सन्धत्स्व' इत्येकेन पदेन प्रतिपादनम् । इति परिपूर्णता अनेन प्रकारेण परिपूर्णता नाम गुणः ।

**सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम् ।**
**अग्राम्यशब्दाभिधानमौदार्यम् ।**
**प्रतीतशब्दप्रयोगः स्पष्टत्वमिति ।**
**अकारादयो वर्णास्त्रिषष्टिः ।**

**वर्णसङ्घातः पदम् । तच्चतुर्विधं नामाख्यातोपसर्गनिपाताश्चेति । तत्र नाम सत्त्वाभिधायि । अविशिष्टलिङ्गमाख्यातं क्रियावाचि । क्रियाविशेषकाः प्रादय उपसर्गाः । अव्ययाश्चादयो निपाताः ।**

---

सुगमसुन्दरार्थप्रतिपादकशब्दप्रयोगो नाम माधुर्यम्, अग्राम्यशब्दप्रयोग औदार्यं, सुप्रसिद्धशब्दप्रयोगश्च स्पष्टत्वमित्याह—**सुखोपनीते**त्यादि ।

शब्दप्रसङ्गात् तद्गतं पदवाक्यविभागं पदवाक्यगतं च लेखे करणीयं विशेषान्तरं निरूपयिष्यन् पदारम्भकत्वात् प्रथममक्षराणि निरूपयति—**अकारादयो वर्णास्त्रिषष्टि**रिति । तत्र ह्रस्वदीर्घप्लुतभेदादचो द्वाविंशतिः, कादयो मावसानाः स्पर्शाख्याः पञ्चविंशतिः, यरलवा अन्तःस्थाख्याश्चत्वारः, अयोगवाहा अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयाश्चत्वारः, यमाक्षराणि चत्वारि, शषसहा ऊष्माख्याश्चत्वारः इत्येवं वर्णानां त्रिषष्टित्वम् । यदाहुः—

> "दीर्घाः स्वराणां तत्राष्टौ पञ्च ह्रस्वाः प्लुता नव ।
> चतुर्धायोगवाहोष्मयमान्तस्थाः पृथक् पृथक् ।
> विंशतिः पञ्च च स्पर्शास्त्रिषष्टिरिति कीर्तिताः ॥"

इति । स्वरानुनासिक्यकृतस्तु भेदो न संख्यातो लौकिकप्रयोगे तदनादरात् ।

पदस्वरूपमाह —**वर्णसंघातः पद**मिति । नियतानुपूर्वीकाणां वर्णानां समूहोऽर्थविशेषसङ्केतितः पदमित्युच्यते । तच्चतुर्विधं नामादिभेदादित्याह—**तदि**ति । नामादिस्वरूपमाह — **तत्रे**ति । तेषु नामादिषु मध्ये, **सत्त्वाभिधायि** जातिगुणद्रव्यवाचकं, **नाम** इत्युच्यते । **अविशिष्टलिङ्गं** स्त्रीपुन्नपुंसकरूपलिङ्गविशेषशून्यं क्रियावाचकम् **आख्यातम्** । **क्रियाविशेषकाः** क्रियागतप्रकर्षादिविशेषद्योतकाः, **प्रादयः** प्र परा अप सम् अनु इत्यादयः **उपसर्गाः** । **अव्ययाः** लिङ्गवचनविभक्तिभेदरहिताः, **चादयः** च वा ह इत्यादयः, **निपाताः** ।

**पदसमूहो वाक्यमर्थपरिसमाप्तौ । एकपदावरस्त्रिपदपरः परपदार्थानुरोधेन वर्गः कार्यः । लेखपरिसंहरणार्थ इतिशब्दो वाचिकमस्येति च ।**

---

**वाक्यस्वरूपमाह— पदे**त्यादि । पदसमूहः पदानां सङ्घातो वाक्यम् इत्युच्यते, अर्थपरिसमाप्तौ अर्थस्य पर्यवसाने सति तेन. पदसमूहेन चेदेको विशिष्टार्थो नैराकाङ्क्षयेण बुद्धौ प्रतिष्ठितो भवतीत्यर्थः । समासकरणविषयमाह—**एके**त्यादि । वर्गः समासः, परपदार्थानुरोधेन कार्यः एकं यत् पदं समासघटकादेकस्मात् पदाद् अन्यत् समासघटकं पदं तस्य अर्थानुरोधेन अर्थमनुसृत्य कार्यः अर्थस्य समासघटकपदान्तरार्थेन सहैकीभावयोग्यतामभिलक्ष्य कार्य इत्यर्थः । पदयोः पदानां वा सति सामर्थ्ये समासः कार्यो नान्यथेत्यभिप्रायः । स च कथम्भूतः कार्यः, एकपदावरस्त्रिपदपरः समस्यमानपदातिरेकेणैकं पदम् अवरं निकृष्टं यस्मिन् स तथाभूतः अर्थाद् द्विपदावरः त्रीणि पदानि पराणि उत्कृष्टानि यस्मिन् स तथाभूतश्च कार्यः, त्र्यधिकपदसमासस्तु न कार्यो माधुर्याद्युक्तगुणहानात् । यदाहुः—

> "माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः ।
> समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥"

इति । **अपरा व्याख्या** — एकपदावरस्त्रिपदपरः इत्यनयोर्यथोक्त एवार्थः, विशेष्यस्तु पदसमूहः, स च सामर्थ्यात् समासलक्षणः । तावता च दीर्घसमासप्रतिषेधस्योक्तस्य सिद्धिः । 'परपदार्थानुरोधेन वर्गः कार्यः' इत्यनेन तु अर्थान्तरं संगृह्यते । तद्यथा— वर्गो विरामोऽवसानं विच्छेद इति पर्यायाः । वर्गः अर्थविश्रान्तिचिह्नं सुखप्रतिपत्त्यर्थं क्रियमाणं, परपदार्थानुरोधेन परपदार्थानुसारेण, कार्यः । अनुपरोधेनेति पाठे परपदार्थानुपघातेन कार्यः । यथा— 'पुराणं मानवो धर्मः स्वको वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः ॥' इत्यस्मिन् श्लोके चत्वारीत्यत्र विरामचिह्नस्य करणे परपदार्थेन नोपरोधः, 'चत्वारि न' इत्यत्र करणे तु स्फुट एव सः इति । लेखपरिसमाप्तिचिह्नमाह — **लेखे**त्यादि । अन्ते इतिशब्दलेखनं 'वाचिकमस्ये'ति लेखनं वा लेखसमाप्तिसूचनप्रयोजनकमित्यर्थः । तत्र लेखनीयार्थस्य निरवशेषतायामितिशब्दः सावशेषतायां 'वाचिकमस्य' इत्युक्तिः । वाचिकमस्येति

**निन्दा प्रशंसा पृच्छा च तथाख्यानमथार्थना ।**
**प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना ॥**
**सान्त्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा ।**
**एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः ॥**

**तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा । गुणवचनमेतेषामेव प्रशंसा । कथमेतदिति पृच्छा । एवम् इत्याख्यानम् । देहीत्यर्थना । न प्रयच्छामीति प्रत्याख्यानम् । अननुरूपं भवत इत्युपालम्भः । मा कार्षीः इति प्रतिषेधः । इदं क्रियताम् इति चोदना । योऽहं स भवान्, मम यद् द्रव्यं तद् भवतः इत्युपग्रहः सान्त्वम् । व्यसनसाहाय्यमभ्यवपत्तिः । सदोषमायतिप्रदर्शनमभिभर्त्सनम् ।**

---

लेखनं च 'वाचिकमस्य लेखहरमुखाच्छ्रोतव्यम्' इत्यादिरीत्या लेखनमिति बोद्धव्यम् ।

अथ लेखनीयतया सम्भावितान् अर्थान् श्लोकाभ्यामुद्दिशति—**निन्दे**-त्यादि । निन्दाप्रशंसादित्रयोदशकविषयतया त्रयोदशविधा लेखार्था इत्यर्थः ॥

निन्दादिकं क्रमेण व्याचष्टे—**तत्रे**त्यादि । अभिजनशरीरकर्मणां दोषवचनं प्रकृतिकुटिला वैश्वामित्रा इत्यभिजनदोषवचनं कुष्ठितो व्याधित इति शरीरदोषवचनं गोघ्नो ब्रह्महेति कर्मदोषवचनं, सेयं **निन्दा** त्रिप्रकारा । तद्वैपरीत्येन तेषामेवाभिजनादीनां गुणवचनं **प्रशंसा** । कथमेतत् करणीयमिति कर्तव्यजिज्ञासा **पृच्छा** । एवमेतत् करणीयमित्युपदेशः पृष्टेन क्रियमाण **आख्यानं** । सन्ध्यादिनिमित्तं किञ्चित् कोशदण्डादिकं देहीति याचनमर्थना । अर्थितस्य न प्रयच्छामीति वचनं **प्रत्याख्यानम्** । अननुरूपं भवत इदं कार्यमित्युक्तिरुपालम्भः । मा कार्षीरित्यकार्यप्रवृत्तेर्वारणमाप्तभावात् क्रियमाणं **प्रतिषेधः** । इदं क्रियतां सन्धानं विग्रहणं वास्मिन् देशकाल इति प्रेरणा **चोदना** । योऽहं स भवान्, मम यद् द्रव्यं तद् भवत इति स्वशरीरसम्बोध्यशरीरयोः स्वद्रव्यसम्बोध्यद्रव्ययोश्चाभेदवचनभङ्ग्यानुकूलनं **सान्त्वम्** । व्यसने रिपूपप्लवादौ साह्यकरणम**भ्यवपत्तिः** । अनित्थंकुर्वाणमाचिरात् त्वां घातयेयं, बद्ध्वा वा कारागृहे निवेशयेयमित्येवमनर्थदोषयुक्तमुत्तरकालकथनमभिभर्त्सनमित्युच्यते ।

अनुनयस्त्रिविधोऽर्थकृतावतिक्रमे पुरुषादिव्यसने चेति ।
प्रज्ञापनाज्ञापरिदानलेखास्तथा परीहारनिसृष्टिलेखौ ।
प्रावृत्तिकश्च प्रतिलेख एव सर्वत्रगश्चेति हि शासनानि ।
अनेन विज्ञापितमेवमाह तद् दीयतां चेद्यदि तत्त्वमस्ति ।
राज्ञः समीपे वरकारमाह प्रज्ञापनैषा विविधोपदिष्टा ॥

भर्तुराज्ञा भवेद् यत्र निग्रहानुग्रहौ प्रति ।
विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम् ॥
यथार्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते ।
अप्याधौ परिदाने वा भवतस्तावुपग्रहौ ॥

---

**अनुनय** इति । अर्थकृतावित्यादयो निमित्तसप्तम्यः । अर्थकरणनिमित्तोऽतिक्रमनिमित्तः पुरुषादिव्यसननिमित्त इति त्रिप्रकारोऽनुनयः । तत्र सामवायिकादिकार्यमवश्यकरणीयमकुर्वाणं प्रति तत्करणार्थं मित्रेण क्रियमाणोऽनुनय आद्यः । स्ववाक्यातिक्रमकुपितं प्रति कोपप्रशमनाय क्रियमाणोऽनुनयो द्वितीयः । पितृभ्रातृपुत्रमित्रामात्यमरणादिव्यसनेष्ववश्यानुग्राह्यं पूर्वमननुगृह्य पश्चात् कार्यवशात् तं प्रति क्रियमाणोऽनुनयस्तृतीयः ।

भूयोऽप्यष्टौ शासनभेदान् श्लोकेनोद्दिशति — **प्रज्ञापने**त्यादि ॥

श्लोकैरेव तेषां विवरणमारभमाणः प्रथमं प्रज्ञापनलेखं व्याचष्टे — **अनेने**ति । प्रज्ञापना नाम महामात्रादीन् प्रति तदीयगूढपुरुषैः क्रियमाणा तन्मित्रामित्रराजपुरुषवृत्तान्तस्यावेदना । एषा विविधा बहुप्रकारा उपदिष्टा । ताममित्रविषयां पूर्वार्धेन प्रदर्शयति — अनेन राजानुचरेण देवदत्तनाम्ना विज्ञापितं राजान्तिके 'महामात्रेण कुतश्चिन्निधिरधिगत आत्मसात्कृत' इति । विज्ञापितश्च राजानेन प्रकारेणाह — 'यदि महामात्रः स्वयं तं निधिं न प्रयच्छति तदाहमेव तं द्विगुणमाहारयिष्यामी'ति । तत्त्वमस्ति चेद्यदि तद् दीयतां यदि निधिद्रव्याधिगमः सत्यः तर्हि तद् दीयतां राज्ञे इत्यर्थः । मित्रविषयां तृतीयपादेन दर्शयति — **राज्ञः समीपे वरकारम्** आह कल्याणं कर्म त्वया क्रियमाणं निवेदयति, अर्थाद् देवदत्तादिः । इह चेत्पदयदिपदयोः सहप्रयोगोऽपिशब्दचशब्दयोरिव द्रष्टव्यः ॥

सामान्यतो यस्मिन्कस्मिंश्चिज्जने विषये विशेषेण पुनर्भृत्येषु विषये निग्रहमनुग्रहं वाधिकुर्वती भर्तुराज्ञा यस्मिन् लेखे, स आज्ञालेख इत्याह — **भर्तु**रित्यादि ॥

**जातेर्विशेषेषु पुरेषु चैव ग्रामेषु देशेषु च तेषु तेषु ।**
**अनुग्रहो यो नृपतेर्निदेशात् तज्ज्ञः परीहार इति व्यवस्येत् ॥**
**निसृष्टिस्थापना कार्यकरणे वचने तथा ।**
**एष वाचिकलेखः स्याद् भवेन्नैसृष्टिकोऽपि वा ॥**

---

परिदानलेखमाह — **यथार्हेत्यादि** । यत्र यस्मिन् लेखे, यथार्हगुणसंयुक्ता उत्तममध्यमाधमसम्बोध्यतारतम्यानुसारिणी, पूजा 'धार्मिकस्य गुणवतस्तवेदमसदृशं दुःखमुपनतं, किं कुर्मः, क्षन्तव्यमेव विवेकिभिरीदृशं कथञ्चिद्' इत्युक्तिरूपः शोककाले, 'स्वनियोगसविशेषानुष्ठानस्यापर्याप्तमपीदमस्माभिर्यत्किञ्चित् पारितोषिकं दीयमानं स्वीकरोतु भवानि'त्युक्तिरूपः स्वामिपरितोषकाले, स्वामिबहुमानः, उपलक्ष्यते, स परिदानलेख इति विधेयाध्याहारः, तस्यैव लक्षणीयतया क्रमप्राप्तत्वात् । तस्य विषयद्वैविध्येन द्वैविध्यं सूचयन्नाह — **अपीति** । तौ परिदानलेखौ, अप्याधौ परिदाने वा, अपिवाशब्दौ समुच्चयार्थौ, आधिर्बन्धुमरणनिमित्ता भृत्यानां मनोव्यथा परिदानं परिरक्षणं भृत्यविषयदयाविष्करणमिति यावत्, आधौ च परिदाने च, उपग्रहौ स्वीकारहेतू स्वतातिशयप्रतिपत्तिहेतू, भवतः ॥

परिहारलेखमाह — **जातेरिति** । अमुकस्य कालस्यामुकब्राह्मणेभ्यः करो न ग्राह्य इत्येवंप्रकारो यो जातिविशेषविषयोऽनुग्रहः, अमीषु नगरेषु वणिग्भ्यः शुल्कममुकस्य कालस्य न ग्राह्यमित्येवंविधो यः पुरविषयः, नवागतकुटुम्बिभ्यः इयतः कालस्य न ग्राह्यः कर इत्येवंप्रायो यो ग्रामविषयः, न कोऽपि राजभागधेयोऽमुकदेशे कालस्यैतावतो ग्राह्य इत्येवञ्जातीयो यो देशविषयः, स सर्वविधोऽप्यनुग्रहो राजशासनात् प्रवृत्तः परीहारसंज्ञित इति लेखप्रकाराभिज्ञो जानीयादिति श्लोकार्थः । तत्रानुग्रहः कश्चित् कराग्रहणरूपः, कश्चित् स्वयं धनदानरूपः, कश्चिदुभयरूप इति त्रिप्रकारो वेदितव्यः ॥

निसृष्टिलेखमाह — **निसृष्टीत्यादि** । कार्यकरणे तथा वचने, निसृष्टिस्थापना कस्यचिदाप्तपुरुषस्य प्रामाण्याख्यानम् 'अमुकस्य क्रिया ममैव क्रिया अमुकस्य वचनं ममैव वचनमि'त्येवं रूपं, निसृष्टिलेख इति लक्ष्यस्याध्याहारः क्रमप्राप्तत्वात् । एतस्य प्रकारद्वयमाह — **एष निसृष्टिलेखः**, वाचिकलेखः स्यात् वचनप्रमाणीकरणाख्यायी सन् वाचिक इति वक्तुमर्हः, नैसृष्टिकोऽपि वा भवेत् क्रियाप्रमाणीकरणाख्यायी सन् नैसृष्टिक इति वक्तुमर्हः ॥

**विविधां दैवसंयुक्तां तत्त्वजां चैव मानुषीम् ।**
**द्विविधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति ॥**
**दृष्ट्वा लेखं यथातत्त्वं ततः प्रत्यनुभाष्य च ।**
**प्रतिलेखो भवेत् कार्यो यथा राजवचस्तथा ॥**

**यत्रेश्वरांश्चाधिकृतांश्च राजा रक्षोपकारौ पथिकार्थमाह । सर्वत्रगो नाम भवेत् स मार्गे देशे च सर्वत्र च वेदितव्यः ॥**

**उपायाः सामोपप्रदानभेददण्डाः ।**

**तत्र साम पञ्चविधं—गुणसङ्कीर्तनं सम्बन्धोपाख्यानं परस्परोपकारसन्दर्शनमायतिप्रदर्शनमात्मोपनिधानमिति ।**

---

प्रावृत्तिकमाह—**विविधामिति ।** विविधाम् अनेकप्रकारां, दैवसंयुक्तां यथाकालवृष्टिपातसुभिक्षाद्यनुकूलदैवफलसिद्धिसम्बद्धाम् अग्निवात्योपप्लवादिदुर्दैवफलसिद्धिसम्बद्धां च, तत्त्वजां पारमार्थिकीम्, मानुषीं चैव यातव्यसमुच्छेदादिरूपां परचक्रचोरादिजनितराज्योपद्रवादिरूपां च, तां प्रवृत्तिं प्रावृत्तिकव्यपदेशनिमित्तभूतां वार्तां, शासनं प्रति लेखविषये, द्विविधां व्यवस्यन्ति शुभाशुभात्मना द्विप्रकारां निश्चिन्वन्ति । प्रवृत्तिद्वैविध्यवचनभङ्ग्या चानया तन्निवेदनफलकस्य प्रावृत्तिकलेखस्य द्वैविध्यमभिहितं बोद्धव्यम् ॥

प्रतिलेखमाह—**दृष्ट्वेति ।** लेखं परस्मादागतं, यथातत्त्वं दृष्ट्वा यथावस्थितपदपदार्थानतिक्रमेण पूर्वं स्वयं वाचनया विज्ञाय, ततः प्रत्यनुभाष्य च पश्चाद् राज्ञः सकाशेऽनुवाच्य च, यथा राजवचः राज्ञ उत्तरवचनं भवति, तथा प्रतिलेखः कार्यो भवेत् ॥

यत्र लेखे राजा ईश्वरान् दुर्गराष्ट्रान्तपालादीन् समाहर्तृप्रशास्तृप्रभृतीनधिकृतांश्च पथिकानां पथि सहायदानलक्षणां रक्षां भक्तयवसेन्धनादिदानलक्षणमुपकारं चाज्ञापयति, स लेखः राज्ञो देशान्तरसञ्चारणे स्वनिवासदेशे सर्वस्मिंश्च काले लेखनार्हत्वान्नाम्ना सर्वत्रगो भवेदित्याह—**यत्रेश्वरांश्चेत्यादि ॥**

शासनाधीनत्वं सन्धिविग्रहयोरुक्तमधस्तात् । सन्धिविग्रहानुष्ठानस्य उपायप्रयोगसापेक्षत्वात् तेष्वपि व्युत्पत्तिः शासनलेखकस्यापेक्षितेति कृत्वा तान् दर्शयति—**उपाया इत्यादि ।**

तत्र साम्नः पञ्च प्रभेदानुद्दिशति—**तत्र सामेत्यादि ।**

**तत्राभिजनशरीरकर्मप्रकृतिश्रुतद्रव्यादीनां गुणागुणग्रहणं प्रशंसा स्तुतिर्गुणसङ्कीर्तनम् ।**

**ज्ञातियौनमौखस्रौवकुलहृदयमित्रसङ्कीर्तनं सम्बन्धोपाख्यानम् ।**

**स्वपक्षपरपक्षयोरन्योन्योपकारसङ्कीर्तनं परस्परोपकारसन्दर्शनम् ।**

**अस्मिन्नेवं कृत इदमावयोर्भवतीत्याशाजननमायतिप्रदर्शनम् ।**

**योऽहं स भवान्, यन्मम द्रव्यं तद् भवता स्वकृत्येषु प्रयोज्यताम् इत्यात्मोपनिधानमिति ।**

**उपप्रदानमर्थोपकारः ।**

---

तत्र प्रथमं सामप्रभेदं व्याचष्टे—**तत्राभिजने**त्यादि । अभिजनः कुलं, शरीरं कर्म च प्रसिद्धे, प्रकृतिः स्वभावः, श्रुतं शास्त्रजनितः संस्कारः, द्रव्यं रथगजतुरगादिपरिग्रहः, आदिपदेन वयोरूपादिग्रहणम् । अभिजनादीनामेषां गुणग्रहणं गुणस्य वस्तुसतः स्वरूपाख्यानं, गुणागुणग्रहणमिति पाठे गुणागुणयोर्वस्तुसतोः स्वरूपाख्यानं, प्रशंसा सश्लाघमाख्यानं, स्तुतिरविद्यमानगुणकीर्तनं च, गुणसङ्कीर्तनं नाम भवति ।

सम्बन्धोपाख्यानं व्याचष्टे—**ज्ञाती**त्यादि । ज्ञातिः समानकुलोत्पन्नः, यौनो योनिकृतः सम्बन्धो विवाहाख्यः, मौखो मुखकृतः सम्बन्धो वाक्सम्बन्धः शिष्याचार्यभावलक्षणः, स्रौवः स्रुवनामकयज्ञपात्रविशेषकृतः सम्बन्धो याज्ययाजकभावरूपः, कुलं पूर्वपुरुषपरम्परा, हृदयं मनोनिबन्धः, मित्रम् उपकारकं, ज्ञात्यादीनां सप्तानां सङ्कीर्तनं सम्बन्धोपाख्यानमित्युच्यते ।

**स्वपक्षे**त्यादि । स्वपक्षपरपक्षयोः, अन्योन्योपकारसङ्कीर्तनं परस्परोपकारो यथा स्यात् तथा कथनं, परस्परोपकारसन्दर्शनं नाम सामभेदः ।

**अस्मिन्नि**ति । अस्मिन् कार्ये, एवं कृते अनेन प्रकारेणानुष्ठिते सति, आवयोरिदं भवति तव च मम चैतत् फलं भविष्यति इत्याशाजननम्, आयतिप्रदर्शनं नाम ।

**योऽहमि**ति । योऽहं स भवान् आवामभिन्नौ, तस्माद्, मम यद् द्रव्यं भूमिहिरण्याद्यस्ति, तद् भवता स्वकृत्येषु प्रयोज्यतां स्वीयद्रव्यनिर्विशेषमुपयुज्यताम्, इतीदृशम्, आत्मोपनिधानं नाम पञ्चमः सामप्रभेदः ।

उपप्रदानाख्यं द्वितीयमुपायं व्याचष्टे—**उपे**त्यादि । अर्थोपकारः भूमिहिरण्यादिरूपार्थदानेनोपकारकरणम्, उपप्रदानम् ।

**शङ्काजननं निर्भर्त्सनं च भेदः ।**

**वधः परिक्लेशोऽर्थहरणं दण्ड इति ।**

**अकान्तिर्व्याघातः पुनरुक्तमपशब्दः संप्लव इति लेखदोषाः ।**

**तत्र कालपत्रकमचारुविषमविरागाक्षरत्वमकान्तिः ।**

**पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः ।**

**उक्तस्याविशेषेण द्वितीयमुच्चारणं पुनरुक्तम् ।**

**लिङ्गवचनकालकारकाणामन्यथाप्रयोगोऽपशब्दः ।**

**अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासः संप्लव इति ।**

तृतीयमुपायं व्याचष्टे — **शङ्केत्यादि** । मित्रेष्वेकस्यापकाराधानेनान्येषां हृदि 'अस्मानप्यसावुच्छेत्स्यती'ति शङ्काया अपरागस्पर्धाहेतोरुत्पादनमेको भेदः, 'त्वामविधेयमभिघातयिष्यामी'त्येवम्प्रकारं निर्भर्त्सनमपरो भेदः ।

दण्डं व्याचष्टे — **वध इत्यादि** । वधो व्यापादनं, परिक्लेशो बन्धनताडनादिभिर्दुःखोत्पादनम्, अर्थहरणं धनापहारः, इदं त्रयं दण्डः । इतिशब्दः समाप्तौ, लेखगुणाख्यानं परिसमाप्तमित्यर्थः ।

अथ लेखदोषानाह — **अकान्तिरित्यादि** ।

**तत्रेति** । तत्र लेखदोषेषु पञ्चसूद्दिष्टेषु मध्ये, कालपत्रकं काले मषीप्रसरणात् स्वभावतो वा मलिने पत्रे लिखितम्, अकान्तिः तदाख्यो दोषः । अचारुविषमविरागाक्षरत्वम् अचारूणि असुन्दराणि विषमाणि अनियतस्थौल्यसौक्ष्म्याणि विरागाणि शुद्धोदकप्रायमषीलिखितानि चाक्षराणि यस्मिंस्तस्य भावस्तत्त्वं च, अकान्तिः । एवमस्य दोषस्याधारप्रयुक्तत्वेनाधेयप्रयुक्तत्वेन च द्वैविध्यं दर्शितम् ।

व्याघातमाह — **पूर्वेणेत्यादि** । पूर्वेणार्थेनोत्तरस्यानुपपत्तिर्विरोधः, व्याघातः, यथा 'प्रणम्याज्ञापयती'ति । इह हि प्रणामाज्ञापनयोर्विरोधः प्रतीतः ।

पुनरुक्तमाह — **उक्तस्येत्यादि** । तद्यथा — पूज्यो मान्य इत्यादिलेखनम् ।

अपशब्दं व्याचष्टे — **लिङ्गेत्यादि** । स्त्रीलिङ्गे प्रयोक्तव्ये पुन्नपुंसकप्रयोगो लिङ्गस्यान्यथाप्रयोगः, एकवचने द्विबहुवचनप्रयोगो वचनस्यान्यथाप्रयोगः, वर्तमाने भूतभविष्यत्प्रयोगः कालस्यान्यथाप्रयोगः, कर्मकारके कर्तृकरणादिकारकप्रयोगः कारकस्यान्यथाप्रयोगः । लिङ्गादीनामेवञ्जातीयोऽन्यथाप्रयोगोऽपशब्द इत्युच्यते ।

**सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च ।**
**कौटल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः ॥**

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
दशमोऽध्यायः शासनाधिकारः,
आदितः एकत्रिंशः ॥

संप्लवमाह—**अवर्ग** इति । वर्गो यतिश्छेद इति पर्यायाः, अवर्गे वर्गायोग्ये वर्गकरणं, वर्गे वर्गयोग्ये अवर्गक्रिया च इति द्वयं, गुणविपर्यासः गुणानामर्थक्रमादिलेखगुणानां वैपरीत्यं च, संप्लवो नाम नाम्ना भवति ।

अध्यायान्ते श्लोकमाह—**सर्वे**त्यादि । कौटल्येन, सर्वशास्त्राणि बार्हस्पत्यादीनि, अनुक्रम्य ज्ञात्वा, प्रयोगमुपलभ्य च शास्त्रानुष्ठानं दृष्ट्वा च, नरेन्द्रार्थे राज्ञः कृते प्रयोजनाय, शासनस्य विधिः, कृत उपदिष्टः । शास्त्रलोकदृष्टस्यापि सतः शासनविधेरिह कौटल्यकृतत्ववचनं कौटल्येन कात्स्न्र्यसौष्ठवातिशययोगसम्पादनादिति बोद्धव्यम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
दशमोऽध्यायः शासनाधिकारः,
आदित एकत्रिंशः ॥

## २९. प्रक. कोशप्रवेश्यरत्नपरीक्षा ।

**कोशाध्यक्षः कोशप्रवेश्यं रत्नं सारं फल्गु कुप्यं वा तज्जातकरणाधिष्ठितः प्रतिगृह्णीयात् ।**

**ताम्रपर्णिकं, पाण्ड्यकवाटकं, पाशिक्यं, कौलेयं, चौर्णेयं, माहेन्द्रं, कार्दमिकं, स्रौतसीयं, ह्रादीयं, हैमवतं च मौक्तिकम् ।**

---

**कोशप्रवेश्यरत्नपरीक्षे**ति सूत्रम् । कोशो भाण्डागारं तत्प्रवेशनार्हाणां रत्नानां माणिक्यमुक्ताप्रवालादीनां, रत्नग्रहणेन संग्राह्यद्रव्योपलक्षणात् सारफल्गुकुप्यानां च, परीक्षात्रोपदिश्यत इति सूत्रार्थः ।

'कोशपूर्वाः सर्वारम्भाः' इति प्रक्रान्तायाः कोशप्रकृतेः समाहर्तृसन्निधातृव्यापारैरुत्पादनं रक्षणं च प्रागभिहितं, स्वरूपलक्षणं त्वनुक्तमिदानीमभिधीयत इति सङ्गतिः ।

**कोशाध्यक्ष इ**ति । कोशाध्यक्षः भाण्डागाराधिकृतः, कोशप्रवेश्यं रत्नं मणिमुक्तादिकं, सारं चन्दनागुरुप्रभृतिकं, फल्गु पट्टदुकूलजातीयं, कुप्यं कुप्याध्यक्षप्रकरणोक्तं सारदारुवेणुवल्कादिकम् आयुधागाराध्यक्षप्रकरणोक्तं यन्त्रायुधावरणादिकं च, वाशब्दः समुच्चये, तज्जातकरणाधिष्ठितः तेषु रत्नादिषु जातास्तज्जातास्तत्सम्बद्धव्यवहारैकवृत्तय इत्यर्थः तज्जातैः करणैः कायस्थैश्च अधिष्ठितः समन्वितः सन्, प्रतिगृह्णीयात् ।

अभ्यर्हितत्वान्मौक्तिकस्य परीक्षां प्रथममाह — **ताम्रपर्णिक**मिति । मौक्तिकं, ताम्रपर्णिकं ताम्रपर्णी नाम पाण्ड्येषु प्रसिद्धा नदी तस्याः समुद्रसङ्गमप्रदेशे समुत्पन्नं, पाण्ड्यकवाटकं मलयकोटिपर्वतोत्पन्नं, पाशिक्यं पाटलिपुत्रान्तिकगतायां पाशिकाख्यायां नद्यामुत्पन्नं, कौलेयं सिंहलद्वीपे मयूरग्रामे कुला नाम नदी तस्यामुत्पन्नं, चौर्णेयं केरलेषु मुरचिनामकपत्तनसमीपे चूर्णी नाम नदी तस्यामुत्पन्नं, माहेन्द्रं महेन्द्रपर्वताभ्यर्णाम्भोधिसम्भवं, कार्दमिकं कर्दमा नाम पारसीकेषु नदी तस्यामुत्पन्नं, स्रौतसीयं बर्बरकूले स्रौतसी नाम नदी तस्यामुत्पन्नं, ह्रादीयं बर्बरकूले समुद्रैकदेशे श्रीघण्टो नाम ह्रदः तस्मिन्नुत्पन्नं, हैमवतं च हिमालयसम्भवं च, भवति । इत्थं मौक्तिकस्योत्पत्तिक्षेत्राणि दश भवन्ति ।

**शङ्खः शुक्तिः प्रकीर्णकं च योनयः ।**

**मसूरकं त्रिपुटकं कूर्मकमर्धचन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्थकं कामण्डलुकं श्यावं नीलं दुर्विद्धं चाप्रशस्तम् ।**

**स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देशविद्धं च प्रशस्तम् ।**

**शीर्षकमुपशीर्षकं प्रकाण्डकमवघाटकं तरलप्रतिबन्धं चेति यष्टिप्रभेदाः ।**

---

मौक्तिकस्य योनीस्तिस्र आह— **शङ्ख** इत्यादि । शङ्खः शुक्तिश्च जलजौ प्रसिद्धौ । प्रकीर्णकं गजकुम्भादिकम् । आहुश्च—

"करका वारिधाराश्च मलयाचन्दनोदकम् ।
शङ्खशुक्तिनिपीतं यन्मौक्तिकं तत् प्रजायते ॥"
"सूकरमृगेन्द्रदंष्ट्रोद्भवानि करिकुम्भजातानि ।
वंशाभोगभुजङ्गोत्तमाङ्गजानि प्रकीर्णानि ॥"

इति ।

अथ मौक्तिकस्य त्रयोदश दोषानाह— **मसूरकमिति** । मसूरकं तदाख्यधान्यविशेषाकारं, त्रिपुटकं तदाख्यधान्याकारं, कूर्मकं तदाकारम्, अर्धचन्द्रकम् अर्धचन्द्राकृति, कञ्चुकितं पटलितं, यमकं युग्मकं, कर्तकं छिन्नकं, खरकम् अश्लक्ष्णं, सिक्थकं सिक्थाकारबिन्दुयुक्तं, कामण्डलुकं कमण्डल्वाकारं, श्यावं कपिशवर्णं, नीलं नीलवर्णं, दुर्विद्धम् अस्थानविद्धम्, ईदृशं मौक्तिकम् अप्रशस्तम् । गुणात् प्राग् दोषवचनं दुष्टस्यात्यन्तानुपादेयत्वद्योतनार्थम् ।

मौक्तिकस्याष्टौ गुणानाह— **स्थूलमिति** । स्थूलं पृथु, वृत्तं चारुपरिमण्डलं, निस्तलं तलरहितं मसृणभूम्यनवस्थायि, भ्राजिष्णु दीप्तिमत्, श्वेतं धवलं, गुरु अलघु, स्निग्धम् अरूक्षं, देशविद्धं च यथास्थानविद्धं च, मौक्तिकं प्रशस्तम् । एषु यस्यकस्यचित् पूर्वोक्तदोषाभावरूपतया सिद्धस्यापीह शब्दतो ग्रहणं स्थूलत्वादिनिर्विशेषं गुणत्वं द्योतयितुम् ।

अथ पञ्च यष्टिभेदानाह— **शीर्षकमिति** । मौक्तिकं महदेकं मध्ये पार्श्वयोस्तु सर्वाणि तनूनि समानि यस्याः सा यष्टिः शीर्षकमित्युच्यते । उपशीर्षकं नाम महदेकं मौक्तिकं मध्ये तत्पार्श्वयोस्तु सममल्पपरिमाणमेकैकमित्येवंक्रमेणानेकैस्त्रिकैः समैर्ग्रथिता यष्टिः । प्रधानमेकं मध्ये तत्पार्श्वयोर्द्वे द्वे

**यष्टीमामष्टसहस्रमिन्द्रच्छन्दः । ततोऽर्धे विजयच्छन्दः । शतं देवच्छन्दः । चतुष्षष्टिरर्धहारः । चतुष्पञ्चाशद् रश्मिकलापः । द्वात्रिंशद् गुच्छः । सप्तविंशतिर्नक्षत्रमाला । चतुर्विंशतिरर्धगुच्छः । विंशतिर्माणवकः । ततोऽर्धमर्धमाणवकः । एत एव मणिमध्यास्तन्माणवका भवन्ति । एकशीर्षकः शुद्धो हारः । तद्वच्छेषाः । मणिमध्योऽर्धमाणव-**

इत्येवंक्रमेणानेकैः पञ्चकैर्ग्रथिता यष्टिः प्रकाण्डकम् । प्रधानमेकं महन्मौक्तिकं मध्ये कृत्वा पार्श्वयोः क्रमकृशोत्तरोत्तरमौक्तिकैर्ग्रथिता यष्टिरवघाटकाख्या । तरलप्रतिबन्धं नाम समप्रमाणमौक्तिकगुम्फिता यष्टिः । चशब्दः समुच्चये । इति यष्टिप्रभेदाः यष्टीनां सराणां प्रभेदाः ।

शीर्षकादीनां पञ्चानां यष्टीनां प्रत्येकं संख्यानियमप्रयुक्तानेकादश भेदानाह— **यष्टीनामिति** । यष्टीनां शीर्षकादिलक्षणानामुक्तानाम्, अष्टसहस्रम् अष्टोत्तरं सहस्रम्, इन्द्रच्छन्दः तदाख्यं भूषणमुच्यते, शीर्षकेन्द्रच्छन्द उपशीर्षकेन्द्रच्छन्द इत्यादिप्रकारैर्व्यपदिश्यत इत्यर्थः । एवमुत्तरत्रापि बोद्धव्यम् । ततोऽर्धे चतुरुत्तरा पञ्चशती, विजयच्छन्दः । शतं देवच्छन्दः शतयष्टिकं देवच्छन्दाख्यम् । एकाशीत्युत्तरैर्यष्टीनामष्टभिः शतैर्युक्तो देवच्छन्द इति कश्चिद् व्याख्यातम् । **चतुष्षष्टिरित्यादिकम् अर्धमाणवक** इत्येवमन्तमुत्तानार्थम् । **एत एवेति** । उक्ता एवेन्द्रच्छन्दादयो, मणिमध्या माणिक्यमध्याः सन्तः, तन्माणवका भवन्ति इन्द्रच्छन्दाद्युपपदमाणवकाः भवन्ति, इन्द्रच्छन्दमाणवको विजयच्छन्दमाणवक इत्येवमादिसंज्ञायुक्ता भवन्तीत्यर्थः । **एके-त्यादि** । एकशीर्षकः शुद्धो हारः एकानि केवलान्युपशीर्षकादिलक्षणास्पृष्टानि शीर्षकाणि शीर्षकाख्याः यथोक्तसंख्या यष्टयो यस्य स तथाभूतः अर्थाद् इन्द्रच्छन्दादिर्विशेष्यः शुद्धहाराख्यो भवति, इन्द्रच्छन्दशीर्षकशुद्धहारो विजयच्छन्दशीर्षकशुद्धहारो देवच्छन्दशीर्षकशुद्धहारोऽर्धहारशीर्षकशुद्धहारो रश्मिकलापशीर्षकशुद्धहार इत्यादिरीत्या व्यवहार्यो भवतीत्यर्थः । शीर्षकविषयेऽभिहितं शुद्धहारव्यपदेशमुपशीर्षकादावतिदिशति — **तद्वदिति** । तद्वद् शीर्षकवत् , शेषा उपशीर्षकादयः, बोद्धव्या इति शेषः । एतदुक्तं भवति— एकशीर्षकवद् एकोपशीर्षक एकप्रकाण्डक एकावघाटक एकतरलप्रतिबन्ध इत्यपरे चत्वारः शुद्धहारा इन्द्रच्छन्दोपशीर्षकशुद्धहारो विजयच्छन्दोपशीर्षकशुद्धहार इत्यादिक्रमेण प्रत्येकमुपगृहीतेन्द्रच्छन्दाविजयच्छन्दादिसंज्ञाका ऊह-

**कस्त्रिफलकः फलकहारः पञ्चफलको वा । सूत्रमेकावली शुद्धा । सैव मणिमध्या यष्टिः । हेममणिचित्रा रत्नावली । हेममणिमुक्तान्तरोऽपवर्तकः । सुवर्णसूत्रान्तरं सोपानकम् । मणिमध्यं वा मणिसोपानकम् ।**

**तेन शिरोहस्तपादकटीकलापजालकविकल्पा व्याख्याताः ।**

**मणिः कौटो मालेयकः पारसमुद्रकश्च ।**

---

नीया इति। **मणिमध्य** इति। मणिर्मरतकादिर्मध्ये यस्य स मणिमध्यः, अर्धमाणवकः पूर्वोक्तो दशयष्टिः, त्रिफलकः पञ्चफलको वा त्रिभिः पञ्चभिर्वा स्वर्णफलकैर्युक्तो भवन् , फलकहारः फलकहारसंज्ञो भवति, स च द्विप्रकारः। **सूत्रमिति** । शुद्धा मणिहीना, एकावली एकः सरः शीर्षकाद्यन्यतमलक्षणः, सूत्रं तदाख्या भवति । **सैवेति** । सैव एकावल्येव, मणिमध्या सती, यष्टिः यष्टिसंज्ञा। **हेमेत्यादि**। हेममणिचित्रा हेममयैर्मणिभिराहितवैचित्र्या यष्टिः, रत्नावली तदाख्या। **हेममणिमुक्तेत्यादि** । हेममणिमुक्तान्तरः हेममणिमुक्ताः पूर्वं हेमगुलिका ततः पद्मरागादिरत्नं ततो मौक्तिकमित्येवंक्रमगुम्फिताः अन्तरे मध्ये यस्य स तथाभूतः, अपवर्तकः तदाख्यः। **सुवर्णेत्यादि**। सुवर्णसूत्रान्तरं सुवर्णसूत्रम् अप्रत्युप्तमणिकं केवलस्वर्णफलकम् अन्तरे मध्ये यस्य तत् तथाभूतं, सोपानकं तत्संज्ञम् । **मणीत्यादि** । मणिमध्यं मणिसोपानकं मणियुक्तं प्रत्युप्तमणिकं मध्यं मध्यसुवर्णफलकं यस्य तत् तथाभूतं मणिसोपानकाख्यम् ।

**तेनेति** । तेन यथोक्तेन शीर्षकादिकण्ठाभरणप्रकारेण, शिरोहस्तपादकटीकलापजालकविकल्पाः शिरआदिचतुष्टयस्य कलापजालकविकल्पाः कलापः सरः जालकं सरसमूहः तयोर्विकल्पाः प्रकाराः, व्याख्याताः उक्तप्राया इत्यर्थः। अत्रायं सङ्ग्रहश्लोकः श्रीभट्टस्वामिनः —

"अष्टौ गुणास्त्रिधा योनिर्दश सम्पत्तिभूमयः ।
त्रयोदशैव मुक्तानां दोषा हाराश्च विंशतिः ॥" इति ।

इति मौक्तिकप्रकरणम् ।

---

अथ मणीनां गुणादीन् वक्तुमुपक्रमते— **मणिरिति** । मणिः, कौटः कोटिर्मलयसागरान्तरं तत्रभवः, मलयैकदेशः कर्णीवनाख्यो माला तस्यां जातो मालेयकः, पारसमुद्रः सिंहलद्वीपस्थो रोहणाद्रिः तज्जः पारसमुद्रकः, इति

**सौगन्धिकः पद्मरागः अनवद्यरागः पारिजातपुष्पकः बालसूर्यकः।**

**वैडूर्यः—उत्पलवर्णः शिरीषपुष्पक उदकवर्णो वंशरागः शुकपत्रवर्णः पुष्यरागो गोमूत्रको गोमेदकः।**

**नीलावलीय इन्द्रनीलः कलायपुष्पको महानीलो जाम्बवाभो जीमूतप्रभो नन्दकः स्रवन्मध्यः।**

**शुद्धस्फटिकः मूलाटवर्णः शीतवृष्टिः सूर्यकान्तश्चेति मणयः।**

---

त्रिविध इत्यर्थः। एवं च मणीनां योनयस्तिस्र इत्युक्तं भवति। प्रायिकं चैतत् स्फटिकवैदूर्यमरतकादीनां विन्ध्यविदूरदर्दरादिषूत्पत्तिदर्शनादित्याहुः। श्लोकं चोदाहरन्ति—

"विन्ध्यो विदूरशैलो मलयो विन्ध्योपलक्षणोद्देशः।
स्त्रीराज्यं चेति पुनस्तस्याकरभूमयोऽभिहिताः॥" इति।

मणिषु पञ्चप्रकारां माणिक्यजातिमाह—**सौगन्धिक** इति। सौगन्धिकः तदाख्यकुसुमवद् ईषन्नैल्यरूषितरक्तवर्णः, पद्मरागः पद्मवर्णः, अनवद्यरागः अनवद्यं कुङ्कुमं तद्वर्णः, पारिजातपुष्पकः पारिजातकुसुमवर्णः, बालसूर्यकः उदयमानसूर्यारुणः।

अष्टप्रकारां वैदूर्यजातिमाह—**वैडूर्य** इति। वैडूर्य इत्यधिकारः। उत्पलवर्णः कोकनदशोणः, शिरीषपुष्पकः शिरीषपुष्पवर्णः, उदकवर्णः उदकवत् स्वच्छवर्णः, वंशरागः वेणुपत्रवर्णः, शुकपत्रवर्णः शुकपक्षच्छविः, पुष्यरागो हरिद्रापिञ्जर इति स्वामी, गोमूत्रकः गोमूत्रच्छायः, गोमेदकः गोमेदो गोरोचना तद्वर्णः।

अष्टविधामिन्द्रनीलजातिमाह—**नीले**त्यादि। नीलावलीयः शुक्ल एव नीलराजितरञ्जितः, इन्द्रनीलः मयूरबर्हवर्णः, कलायपुष्पकः कलायो धान्यभेदः तत्पुष्पसमच्छविः, महानीलः भ्रमरवर्णः, जाम्बवाभः जम्बूफलवर्णः, जीमूतप्रभः मेघवर्णः, नन्दकः अन्तःशुक्लो बहिर्नीलः, स्रवन्मध्यः स्रवज्जलाकाररश्मिप्रसरः।

चतुर्विधां स्फटिकजातिमाह—**शुद्धे**त्यादि। शुद्धस्फटिकः अत्यन्तशुक्लः, मूलाटवर्णः उद्धृतस्नेहदधिच्छायः, शीतवृष्टिः चन्द्रकान्तः यश्चन्द्रकिरणस्पर्शे द्रवति, सूर्यकान्तः यः सूर्यकरसम्पर्केऽग्निं वमति। चशब्दः समुच्चये। इति मणयः मणिभेदाः।

**षडश्रश्चतुरश्रो वृत्तो वा, तीव्ररागः संस्थानवानच्छः स्निग्धो गुरुरर्चिष्मानन्तर्गतप्रभः प्रभानुलेपी चेति मणिगुणाः ।**

**मन्दरागप्रभः सशर्करः पुष्पच्छिद्रः खण्डो दुर्विद्धो लेखाकीर्ण इति दोषाः ।**

आर्याश्चात्राचार्यैरुदाहृताः—

"शशरुधिरजपाबन्धूकसन्निभाः पारिजातपुष्पाभाः ।
तरुणतरणित्विषो वा त एव खलु पद्मरागाः स्युः ॥
शुकबर्हवारिसैन्धवशिरीषकुसुमप्रभं हरिद्राभम् ।
मार्जारनयननैल्यं वंशच्छदकान्ति वैदूर्यम् ॥
बर्हिणचन्द्रकवर्णा भ्रमराभाः पक्वजम्ब्वाभाः ।
सूर्यांशुतापयोगात् कृच्छ्रालोका महानीलाः ॥
मन्दरमथनायासितवासुकिजविषोद्भवा मरतकस्य ।
प्रथमोत्पत्तिः कथिता केचिद् भुजगाण्डजेति जगुः ॥
गरुडच्छदप्रकाशं कदलीदलवंशपत्रवर्णं वा ।
परिपक्वकलमकणिशानुकारि वा मरतकं गदितम् ॥"

इति ।

केचित् पुनः सौगन्धिकशब्दस्य माणिक्यपर्यायतां वदन्तः सौगन्धिक इति वैदूर्याधिकारवद् माणिक्याधिकारस्तस्य प्रभेदाः पद्मरागादयश्चत्वार इति, उत्पलवर्णादयो नीलावलीयान्ता वैदूर्यस्य नव प्रभेदा इति, इन्द्रनील इत्यधिकारः कलायपुष्पकादयः स्रवन्मध्यान्तास्तस्य षट् प्रभेदा इति, शुद्धस्फटिकादयश्चत्वारः स्फटिकप्रभेदा इति च व्याचक्षत इत्याह स्वामी ।

अथैकादश मणिगुणानाह—**षडश्र** इति । षडश्रः षट्कोटिः, चतुरश्रश्चतुष्कोटिः, वृत्तः चारुपरिमण्डलः, तीव्ररागः अत्यन्तभास्वरः, संस्थानवान् भूषणप्रतिवापयोग्यावयवसन्निवेशः, अच्छः निर्मलः, स्निग्धः मसृणः, गुरुः भारवान्, अर्चिष्मान् दीप्तिमान्, अन्तर्गतप्रभः मध्यभागेऽपि प्रभातरलः, प्रभया स्वीयया सन्निकृष्टमनुलिम्पतीति प्रभानुलेपी, चेति समुच्चये ।

सप्त मणिदोषानाह—**मन्दे**त्यादि । मन्दरागप्रभः मन्दरागो वर्णरहितः मन्दप्रभो द्युतिहीनः, सशर्करः पुलकितः, पुष्पच्छिद्रः बिन्दुगर्भः, खण्डः दीर्णः, दुर्विद्धः अस्थानविद्धः, लेखाकीर्णः राजियुक्तः, इति दोषाः । अत्र भट्टस्वामिना बार्हस्पत्यौ द्वौ श्लोकावुदाहृतौ—

विमलकः सस्यकोऽञ्जनमूलकः पित्तकः सुलभको लोहिताक्षो मृगाश्मको ज्योतीरसको मैलेयक आहिच्छत्रकः कूर्पः प्रतिकूर्पः सुगन्धिकूर्पः क्षीरपकः शुक्तिचूर्णकः शिलाप्रवालकः पुलकः शुक्रपुलकः इत्यन्तरजातयः ।

शेषाः काचमणयः ।

सभाराष्ट्रकं मध्यमराष्ट्रकं कास्तीरराष्ट्रकं श्रीकटनकं मणिमन्तकमिन्द्रवानकं च वज्रम् ।

---

"पुष्पच्छिद्रोऽथ दुर्विद्धः शर्करानुगतस्तथा ।
मन्दरागप्रभश्चैव जातिभेदाः प्रकीर्तिताः ॥
प्रान्तश्च वामवृत्तश्च वलितास्यः (क) शान्वितः ।
कूष्णिकश्च विशीर्णश्च नहि शास्त्रे प्रशस्यते ॥" इति ।

अथावान्तरजातिमणीनाह—विमलक इति । विमलकः श्वेतहरितः, सस्यको नीलः, अञ्जनमूलकः नीलश्यामः, पित्तका गोपित्तवर्णः, सुलभकः शुक्लः, लोहिताक्षः पर्यन्तरक्तः कृष्णमध्यः, मृगाश्मकः सितासितः, ज्योतीरसकः शुक्लोहितः, मैलेयकः हिङ्गुलकच्छायः, आहिच्छत्रकः मन्दरागः, कूर्पः शर्करिलः, प्रतिकूर्पः सिक्थकरुचिः, सुगन्धिकूर्पः मुद्गवर्णः, क्षीरपको दुग्धवर्णः, शुक्तिचूर्णको नैकवर्णः, शिलाप्रवालकः प्रवालवर्णः, पुलकः कृष्णगर्भः, शुक्रपुलकः शुक्लगर्भः, इत्यन्तरजातयः अनेन प्रकारेणाष्टादशावान्तरजातिमणयो बोद्धव्याः । त एते प्रशस्ताः ।

अप्रशस्तानाह—शेषा इति । शेषाः उक्तेभ्योऽन्ये, काचमणयः अधममणयः । अत्र सङ्ग्रहश्लोकं पठन्ति—

"पञ्चविंशतिभेदानां गुणास्त्वेकादश स्मृताः ।
सप्त दोषा मणीनां तु दशाष्टौ च विजातयः ॥" इति ।

अथ वज्रमणेराकरयोनिवर्णगुणदोषा वर्ण्यन्ते । तत्राकरानाह—सभेत्यादि । वज्रं हीरः, सभाराष्ट्रकं वैदर्भकं, मध्यमराष्ट्रकं कोसलोत्पन्नं, कास्तीरराष्ट्रकं कास्तीरराष्ट्रजं, श्रीकटनकं श्रीकटनपर्वतभवं, मणिमन्तकम् उत्तरापथवर्तिमणिमन्तकाख्यपर्वतजम्, इन्द्रवानकं कालिङ्गकं, चः समुच्चये । एवं सभाराष्ट्रादयो वज्रस्य षडाकरा उक्ताः । एतच्चोपलक्षणमन्यत्रापि वज्रस्योत्पत्तिदर्शनादिति ज्ञेयम् ।

**खनिः स्रोतः प्रकीर्णकं च योनयः ।**

**मार्जाराक्षकं च शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीपुष्पकवर्णं मणिवर्णानामन्यतमवर्णमिति वज्रवर्णाः ।**

**स्थूलं स्निग्धं गुरु प्रहारसहं समकोटिकं भाजनलेखि तर्कुभ्रामि भ्राजिष्णु च प्रशस्तम् ।**

**नष्टकोणं निरश्रि पार्श्वापवृत्तं च अप्रशस्तम् ।**

---

वज्रस्य त्रिविधां योनिमाह — **खनिरिति** । खनिः खन्यमानो भूप्रदेशविशेषः, स्रोतः जलप्रवाहविशेषः, प्रकीर्णकं गजदन्तमूलादि ।

वज्रस्य वर्णानाह — **मार्जारेत्यादि** । मार्जाराक्षकं मार्जारनेत्रच्छायम् । शेषं व्याख्यातचरम् । मार्जारनेत्रादिपुष्पकान्तसवर्णत्वं प्रायिकत्वात् पृथगभिधाय विरलदर्शनं मण्यन्तरसाधारणं वर्णान्तरमतिदिशति — **मणिवर्णानामन्यतमवर्णमिति** । इति वज्रवर्णाः ।

अष्टौ गुणानाह — **स्थूलमिति** । स्थूलादित्रिकमवगतार्थम् । प्रहारसहं शिलापुत्रकप्रहारेणाप्यभेद्यं, समकोटिकं समास्तुल्याः कोटयो यस्य तत्, भाजनलेखि सोदकमसृणकांस्यपात्रीनिवेशितं वज्रं परिचाल्यमानं सत् पात्रे लेखोत्पादकं, तर्कुभ्रामि तर्कुभ्रमियन्त्रं तद्वद् भ्रमणशीलं, भ्राजिष्णु अतिमात्रदीप्तिकं, चः समुच्चये, प्रशस्तम् उत्तमं वज्रम् । श्लोकाश्चात्र भवन्ति —

"तर्कुभ्रामि स्निग्धं समकोटि महद् गुरु प्रहारसहम् ।
तमति च भाजनलेखि प्रशस्ततमं वज्रमुद्दिष्टम् ॥
क्षिप्तमग्नौ च यद् वज्रं वर्णान्यत्वं न गच्छति ।
शाणे वा घृष्यमाणं च निकषे वा विरज्यते ॥
वृत्तिकैराहतं यच्च विपत्तिं नैव गच्छति ।
रागवर्णसमायुक्तं बही रश्मिसमन्वितम् ॥
गुरुस्नेहयुतं चैव गुणैरेभिः समन्वितम् ।
एतद् विशिष्टं वज्राणां रत्नाधिपतिकीर्तितम् ॥
नष्टकोणं निरश्रीकं पार्श्वयातं च वर्जयेत् ।" इति ।

अधमं त्रिविधमाह — **नष्टेत्यादि** । नष्टकोणं शिखरशून्यं, निरश्रि अश्रिरहितं, पार्श्वापवृत्तम् एकपार्श्वनिस्सृतम् । अन्ये तु दोषाः यथोक्तगुणवैपरीत्यात्मानः स्वयमूहनीयाः । यदाहुः —

**प्रवालकम् आलकन्दकं वैवर्णिकं च रक्तं पद्मरागं च करट-गर्भिणिकावर्जमिति ।**

**चन्दनं—सातनं रक्तं भूमिगन्धि । गोशीर्षकं कालताम्रं मत्स्य-गन्धि । हरिचन्दनं शुकपत्रवर्णमाम्रगन्धि । तार्णसं च । ग्रामेरुकं रक्तं रक्तकालं वा बस्तमूत्रगन्धि । दैवसभेयं रक्तं पद्मगन्धि । जावकं च ।**

---

"विरूपान् मन्दरागांश्च निष्प्रभान् क्रूरदर्शनान् ।
दग्धांश्चोद्गारिणश्चैव वज्राञ्छत्रुषु निक्षिपेत् ॥"

इति ।

इति वज्रनिरूपणम् ।

---

अथ प्रवालमाह—**प्रवालकमिति** । प्रवालकम्, आलकन्दकम् अल-कन्दो नाम बर्बरकूले समुद्रैकदेशस्तत्र भवं, वैवर्णिकं विवर्णो नाम यवनद्वीपे समुद्रैकदेशस्तत्रोत्पन्नं च, इति द्वियोनिकम् । रक्तं पद्मरागं चेति द्विवर्णकम् । करटगर्भिणिकावर्जमिति द्विदोषत्ववचनं, करटं क्रिमिजग्धं गर्भिणिकां स्थूलमध्यं च वर्जयित्वान्यत् प्रवालकमुपादेयमित्यर्थः । इतिशब्दः समाप्तौ, रत्नपरीक्षा समाप्तेत्यर्थः ।

इति प्रवालनिरूपणम् ।

---

अथ सारेषु निरूपणीयेषु प्रथमं सारमुख्यं चन्दनमाह—**चन्दन-मिति** । चन्दनम् अधिक्रियत इत्यर्थः । तस्य सातनादय उत्पत्तिभूमयः षोडश, रक्तादयो वर्णा नव, भूमिगन्धादयो गन्धाः षट्, लघुत्वादयो गुणा एकादश । त एतेऽभिधीयन्ते । **सातनमिति** । सातनं सातनदेशभवं, रक्तं रक्तवर्णं, भूमिगन्धि नवसिक्तभूसमानगन्धम् । गोशीर्षकं तद्देशजं, कालताम्रं कृष्ण-शोणं, मत्स्यगन्धि मत्स्यतुल्यगन्धं, रक्तकरवीरतुल्यगन्धीति स्वामी । हरि-चन्दनं हरिदेशजं चन्दनं, शुकपत्रवर्णम्, आम्रगन्धि चूतफलतुल्यगन्धि । तार्णसं च तृणसाख्यनदीनिकटभवं चन्दनं, चकारात् शुकपत्रवर्णम् आम्र-गन्धि च । ग्रामेरुकं ग्रामेरुप्रभवं, रक्तं रक्तकालं वा, बस्तमूत्रगन्धि अज-मूत्रगन्धि, बस्तशब्दः कस्तूरीमृगवचन इत्यन्ये । दैवसभेयं देवसभायां भवं, रक्तं, पद्मगन्धि । सातनादयस्त्रयोदश मलयैकदेशाः । जावकं च जावक-

जोङ्गकं रक्तं रक्तकालं वा स्निग्धम् । तौरूपं च । मालेयकं पाण्डुरक्तम् । कुचन्दनं कालवर्णकं गोमूत्रगन्धि । कालपर्वतकं रूक्षमगुरुकालं रक्तं रक्तकालं वा । कोशकारपर्वतकं कालं कालचित्रं वा । शीतोदकीयं पद्माभं कालस्निग्धं वा । नागपर्वतकं रूक्षं शैवलवर्णं वा । शाकलं कपिलमिति ।

लघु स्निग्धमश्यानं सर्पिःस्नेहलेपि गन्धसुखं त्वगनुसार्यनुल्बणमविराग्युष्णसहं दाहग्राहि सुखस्पर्शनमिति चन्दनगुणाः ।

---

देशभवं च, रक्तं पद्मगन्धि चेत्यनुषज्यते । जोङ्गकं, रक्तं रक्तकालं वा, स्निग्धं स्नेहगुणयुक्तं, गन्धान्तरानुक्त्यात्रापि पद्मगन्धीति सम्बध्यते । तौरूपं च, जोङ्गकमिव रक्तं रक्तकालं वा स्निग्धं पद्मगन्धि चेत्यर्थः । जावकादित्रिकं कामरूपजं बोद्धव्यम् । मालेयकं, पाण्डुरक्तं, पूर्ववत् पद्मगन्धि च । एवञ्च दैवसभेयादिमालेयकान्तसप्तकस्य पद्मगन्धित्वमुक्तं भवति । कुचन्दनं, कालवर्णकं कृष्णं, गोमूत्रगन्धि गोमूत्रं हि परिणामे सुगन्धि, अपरे तु गोमूत्रं नीलोत्पलमिति सम्प्रदाय इत्याहुः । कालपर्वतकं तद्देशभवं, रूक्षं खरम्, अगुरुकालम् अगुरुवत् कृष्णं, रक्तं, रक्तकालं वा कृष्णारुणं वा । पूर्वोक्तन्यायेनात्र गोमूत्रगन्धीति सम्बन्धनीयम् । क्वचिदादर्शेषु 'कुचन्दनं कालरूक्षमगुरुकालं रक्तं रक्तकालं वा कालपर्वतकमनवद्यवर्णं वा' इति पाठो दृश्यते स गन्धानुक्तेरशुद्धः प्रतिभाति । तत्रानवद्यवर्णमित्यस्य कुङ्कुमवर्णमित्यर्थः, शेषं तु सुबोधम् । कोशकारपर्वतकं तदाख्यदेशभवं, कालं, कालचित्रं वा कृष्णकर्बुरं वा । शीतोदकीयं शीतोदकदेशभवं, पद्माभं पद्मवर्णं, कालस्निग्धं वा । नागपर्वतकं तदाख्यदेशजं, रूक्षं खरं, शैवलवर्णं जलनीलीवर्णम् । शाकलं शाकलदेशोद्भवं, कपिलं कडारवर्णम् । इह कालपर्वतकादीनां शाकलान्तानां कुचन्दनवद् गोमूत्रगन्धित्वं द्रष्टव्यम् ।

एवं जातिवर्णगन्धा उक्ताः । गुणानाह—लघ्वित्यादि । लघु अभारिकं, स्निग्धं मसृणम्, अश्यानं चिरशोषि, सर्पिःस्नेहलेपि घृतमिव देहं स्नेहेन लिम्पति यत् तथाभूतं, गन्धसुखं गन्धेन मोदजनकं, त्वगनुसारि त्वचमनुप्रविश्य सुखकरम्, अनुल्बणं सूक्ष्मत्वादस्फुटम्, अविरागि द्रव्यान्तरमिश्रणे स्वेदाद्युपघाते चाविकृतवर्णगन्धम्, उष्णसहं स्वलिप्ताङ्गस्योष्णसंवेदनप्रतिबन्धि, दाहग्राहि सन्तापहरं, सुखस्पर्शनं स्पर्शे नवनीतवत् सुखाव-

**अगुरु—जोङ्गकं कालं कालचित्रं मण्डलचित्रं वा। श्यामं दोङ्गकम्। पारसमुद्रकं चित्ररूपम्। उशीरगन्धि नवमालिकागन्धि वेति।**

**गुरु स्निग्धं पेशलगन्धि निर्हारि अग्निसहमसंप्लुतधूमं समगन्धं विमर्दसहमित्यगुरुगुणाः।**

**तैलपर्णिकं—अशोकग्रामिकं मांसवर्णं पद्मगन्धि। जोङ्गकं रक्तपीतकमुत्पलगन्धि गोमूत्रगन्धि वा। ग्रामेरुकं स्निग्धं गोमूत्रगन्धि।**

---

हम्। इति चन्दनगुणाः अनेन प्रकारेणैकादश चन्दनस्य गुणा विज्ञेयाः। अत्र सङ्ग्रहश्लोकं पठन्ति —

"षड् गन्धा नवधा वर्णो गुणाश्चैकादश स्मृताः।
चन्दनानां समासेन षोडशोत्पत्तिभूमयः॥" इति।

अथागुरुजातिवर्णगन्धगुणानाह—अगुर्वित्यादि। अगुर्वित्यधिकारः। जोङ्गकं तदाख्यमगुरु त्रिविधं, कालं कृष्णं, कालचित्रं कृष्णगौररेखामिश्रं, मण्डलचित्रं कृष्णगौरबिन्दुचित्रमिति स्वामी, वाशब्दः समुच्चये। दोङ्गकं तदाख्यं, श्यामम्। जोङ्गकदोङ्गके कामरूपभवे। पारसमुद्रकं सिंहलद्वीपोत्पन्नं, चित्ररूपं नानावर्णम्। गन्धमाह—उशीरगन्धि नवमालिकागन्धि वेति। गन्धद्वैविध्यमनेनोक्तम्।

अगुरुणो जातिवर्णगन्धानुक्त्वा गुणानाह—गुर्विति। गुरु भारिकं, स्निग्धम् अपरुषं, पेशलगन्धि हृद्यगन्धं, निर्हारि दूरप्रसृत्वरगन्धम्, अग्निसहम् अग्निना क्षिप्रं न दह्यते, असंप्लुतधूमम् अव्याकुलधूमं, समगन्धं दह्यमानमादिमध्यान्तेष्वेकरूपगन्धं, विमर्दसहं वस्त्रादिनिर्मार्जनेऽप्यक्षीयमाणगन्धमित्यर्थः। इति अगुरुगुणाः। तदेवम्—

"उत्पत्तिभूमयस्तिस्रः कृष्णो वर्णः प्रधानतः।
द्वावेवागुरुणो गन्धौ गुणास्तस्याष्ट कीर्तिताः॥"

इति सङ्ग्रहश्लोकः।

अथ तैलपर्णिकस्य योन्यादिकमाह—तैलपर्णिकमित्यादि। तैलपर्णिकमित्यधिकारः। अशोकग्रामिकम् अशोकग्रामे कामरूपवर्तिनि भवं, मांसवर्णं हरिणमांसपेशीवर्णमिति स्वामी, पद्मगन्धि। जोङ्गकं कामरूपस्थे जोङ्गाख्ये प्रदेशे भवं, रक्तपीतकं मनःशिलावर्णम्, उत्पलगन्धि गोमूत्रगन्धि वा भवति। ग्रामेरुकं कामरूपवर्तिनि ग्रामेरुसंज्ञे ग्रामे भवं, स्निग्धं, गोमूत्रगन्धि,

**सौवर्णकुड्यकं रक्तपीतं मातुलुङ्गगन्धि । पूर्णकद्वीपकं पद्मगन्धि नवनीतगन्धि वेति ।**

**भद्रश्रीयं— पारलौहित्यकं जातीवर्णम् । आन्तरवत्यमुशीरवर्णम् । उभयं कुष्ठगन्धि चेति ।**

**कालेयकः— स्वर्णभूमिजः स्निग्धपीतकः । औत्तरपर्वतको रक्तपीतकः । इति साराः ।**

**पिण्डकाथधूमसहमविरागि योगानुविधायि च । चन्दनागुरुवच्च तेषां गुणाः ।**

---

जोङ्गकवद् रक्तपीतवर्णम् । सौवर्णकुड्यकं सुवर्णकुड्यो नाम ग्रामः कामरूपगः तत्र जातं, रक्तपीतं, मातुलुङ्गगन्धि । पूर्णकद्वीपकं पूर्णकद्वीपः कामरूपेष्वेव तत्र भवं, पद्मगन्धि, नवनीतगन्धि वा, वर्णस्तु रक्तपीतम् ।

भद्रश्रीयस्य योन्यादिकमाह — भद्रश्रीयमित्यादि । भद्रश्रीयं चन्दनविशेषः । भद्रश्रीयपदार्थे 'केचित् कर्पूरमित्याहुस्तक्कोलमिति चापरे । श्रीवासकं तथा केचित् केचिल्लोहितचन्दनम् ॥' इति विप्रतिपत्तयः स्वामिनोक्ताः । पारलौहित्यकं कामरूपे लौहित्याख्यनदपारभवं, जातीवर्णं जातीकुसुमवर्णम् । आन्तरवत्यं कामरूपेष्वेवान्तरवत्याख्यनदीतीरे जातम्, उशीरवर्णं लामज्जच्छायम् । उभयं [illegible], कुष्ठगन्धि च पारिसाव्याख्यौषधगन्धि च । इतिशब्दः [illegible] ।

कालेयकस्य [illegible] इति । कालेयको नाम काष्ठविशेषः, स स्वर्णभूमिजः सुवर्णभूमिर्नाम देशस्तत्रोत्पन्नः, स्निग्धपीतकः मसृणः पीतवर्णश्च । औत्तरपर्वतकः हैमवतः, रक्तपीतकः मनश्शिलावर्णः । इति उक्तैः प्रकारैः, साराः चन्दनादिकालेयकान्ताः सारपदार्था निरूपिता इत्यर्थः ।

अथ तैलपर्णिकादीनां त्रयाणां गुणमाह—पिण्डेत्यादि । पिण्डकाथधूमसहं पिण्डं पेषणादिना पिण्डीकरणं क्वाथम् अग्निना क्वथनं धूमं धूपनं च सहत इति तथाभूतं, पेषणक्वथनधूपनेष्वविसंवादिगन्धमित्यर्थः, अविरागि द्रव्यान्तरामिश्रणेन कालान्तरेण वा निर्विकारस्वभावं, योगानुविधायि च गन्धयुक्त्यनुकूलं च । तैलपर्णिकादित्रिकं तु विशेष्यं गम्यम् । उक्ताः पिण्डसहत्वादयो न केवलं तैलपर्णिकादीनां गुणाः, किन्तु चन्दनागुरुवच्च तेषां गुणा भव-

**कान्तनावकं प्रैयकं चौत्तरपर्वतकं चर्म। कान्तनावकं मयूरग्रीवाभम्। प्रैयकं नीलपीतश्वेतं लेखाबिन्दुचित्रम्। तदुभयमष्टाङ्गुलायामम्।**

**बिसी महाबिसी च द्वादशग्रामीये। अव्यक्तरूपा दुहिलिका चित्रा वा बिसी। परुषा श्वेतप्राया महाबिसी। द्वादशाङ्गुलायाममुभयम्।**

**श्यामिका कालिका कदली चन्द्रोत्तरा शाकुला चारोहजाः। कपिला बिन्दुचित्रा वा श्यामिका। कालिका कपिला कपोतवर्णा वा। तदुभयमष्टाङ्गुलायामम्। परुषा कदली हस्तायता। सैव चन्द्रचित्रा**

---

न्तीत्याह — चन्दनागुरुवच्च तेषां गुणा इति; चन्दनवद् गुणाः एकादश लघुत्वादयः, अगुरुवद् गुणा अष्टौ गुरुत्वादयः।

इति सारनिरूपणम्।

---

अथ फल्गुषु निरूपणीयेषु प्रथमं पञ्चदशप्रकारा चर्मजातिर्निरूप्यते— **कान्तनावकमित्यादिना** इति चर्मजातय इत्यन्तेन। तत्रादौ प्रकारद्वयमुद्दिशति — **कान्तनावकमिति**। कान्तनावकं तदाख्यदेशभवं, **प्रैयकं च** तदाख्यदेशभवं च, औत्तरपर्वतकं हैमवतं चर्म। एवञ्च कान्तनावकप्रैयकाख्यौ हिमवत एवैकदेशौ बोद्धव्यौ। तत्र कान्तनावकं, मयूरग्रीवाभमित्येकविधम्। प्रैयकं तु, नीलपीतं, श्वेतं, लेखाबिन्दुचित्रं लेखाभिः कृतवैचित्र्यं बिन्दुभिः कृतवैचित्र्यं चेति चतुर्विधम्। तदुभयं कान्तनावकं प्रैयकं च, अष्टाङ्गुलायामम्।

**बिसीति**। बिसी महाबिसी च इत्येते चर्मणी, द्वादशग्रामीये हिमालयस्थेषु द्वादशम्लेच्छग्रामेषु भवे। तत्र बिस्याः स्वरूपमाह—**अव्यक्तेत्यादि**। बिसी, अव्यक्तरूपा सरटविशेषवद् बहुवर्णप्रतिभासयोगादनिर्धारितैकवर्णा, दुहिलिका लोमशा, दुहिलितिकेति क्वापि पाठः, चित्रा वा, भवति। महाबिसी परुषा खरस्पर्शा, श्वेतप्राया धवलवर्णभूयिष्ठा। उभयं बिसी महाबिसीति द्वयं, द्वादशाङ्गुलायामम्।

आरोहाख्यहिमवत्प्रदेशभवान् श्यामिकाकालिकादीन् पञ्च भेदान् उद्दिशति — **श्यामिकेत्यादि**। श्यामिका, कपिला कडारवर्णा, बिन्दुचित्रा वा, भवति। कालिका, कपिला, कपोतवर्णा वा, भवति। तदुभयं श्यामिकादिद्वयम्, अष्टाङ्गुलायामम्। कदली, परुषा कर्कशस्पर्शा, हस्तायता चतु-

चन्द्रोत्तरा । कदलीत्रिभागा शाकुला कोठमण्डलचित्रा कृतकर्णिकाजिनचित्रा चेति ।

सामूरं चीनसी सामूली च बाह्लवेयाः । षट्त्रिंशदङ्गुलमञ्जनवर्णं सामूरम् । चीनसी रक्तकाली पाण्डुकाली वा । सामूली गोधूमवर्णेति ।

सातिना नलतूला वृत्तपुच्छा च औद्राः । सातिना कृष्णा । नलतूला नलतूलवर्णा । कपिला वृत्तपुच्छा च । इति चर्मजातयः ।

चर्मणां मृदु स्निग्धं बहुलरोम च श्रेष्ठम् ।

---

विंशत्यङ्गुलदीर्घा । वर्णस्त्वस्याः कालिकावत् । सैव कदली, चन्द्रचित्रा चन्द्राकारमण्डलयुक्ता, चन्द्रोत्तरा नाम भवति । प्रमाणं त्वस्याः कदलीवत् । शाकुला, कदलीत्रिभागा कदल्यपेक्षया त्रिगुणपरिमाणा त्रिहस्तायामेत्यर्थ इत्येके, कदलीप्रमाणतृतीयांशप्रमाणा अष्टाङ्गुलायतेत्यर्थ इत्यपरे, कोठमण्डलचित्रा रक्तमण्डलयुक्ता, कृतकर्णिकाजिनचित्रा कृतैः स्वभावकृतैः कर्णिकाजिनैश्चर्मग्रन्थिभिः चित्रा जनितशोभा । चशब्दः समुच्चये । इतिशब्द आरोहजसमाप्तौ ।

त्रिप्रकारां बाह्लवेयजातिमाह —सामूरमित्यादि । बाह्लवः हिमवत एकदेशः तत्र भवाश्चर्मजातयो बाह्लवेयाः । ढप्रत्ययान्तश्चायम् । षट्त्रिंशादित्यादि चीनसीसामूल्योः प्रमाणं सामूरवत् षट्त्रिंशदङ्गुलं द्रष्टव्यम् । इतिशब्दः समाप्तौ ।

इत्थं मूषिकादिस्थलचरचर्माण्यभिधाय जलचरचर्माण्याह — सातिनेति । सातिना नलतूला वृत्तपुच्छा च इति त्रिविधाः, औद्राः उद्रो जलमार्जारस्तस्येमे त्वग्भेदा इत्यर्थः । सातिना, कृष्णा कृष्णवर्णा । नलतूला नलतूलवर्णा नलतूलो नलाख्यतृणविशेषस्य पक्ष्म तस्येव वर्णो यस्याः सा । वृत्तपुच्छा, कपिला कडारवर्णा । इति चर्मजातयः उक्तेन प्रकारेण चर्मजातयोऽनुक्ता अपि यथाप्रसिद्धि बोद्धव्या इत्यर्थः ।

चर्मगुणांश्चाह — चर्मणामित्यादि । चर्मणामिति निर्धारणे षष्ठी । शेषं स्पष्टम् ।

इति चर्मनिरूपणम् ।

**शुद्धं शुद्धरक्तं पक्षरक्तं च आविकम्। खचितं वानचित्रं खण्डसङ्घात्यं तन्तुविच्छिन्नं च।**

**कम्बलः केचलकः कलमितिका सौमितिका तुरगास्तरणं वर्णकं तलिच्छकं वारवाणः परिस्तोमः समन्तभद्रकं च आविकम्।**

**पिच्छिलमार्द्रमिव च सूक्ष्मं मृदु च श्रेष्ठम्।**

**अष्टप्रोतिसङ्घात्या कृष्णा भिङ्गिसी वर्षवारणम्, अपसारक इति नैपालकम्।**

---

अथाविकं सप्तदशप्रकारं निरूपयिष्यन् प्रथमं रागभेदेन त्रिविधमाह — **शुद्धमिति**। अवयो मेषा नाम लोमोपकारिणः पशवः तल्लोमभवम् आविकम्। अधिकारश्चायम्। शुद्धं शुक्लं, शुद्धरक्तं सर्वारुणं, पक्षरक्तं च एकदेशारुणं च, भवति। क्रियाभेदेन चतुर्विधमाह — **खचितमिति**। खचितं सूचिवानकर्मनिष्पादितं, वानचित्रं वानकर्मणा कृतवैचित्र्यं, खण्डसङ्घात्यं खचितानामुतानां वा बहूनां खण्डानां सङ्घातेन निष्पादितं, तन्तुविच्छिन्नं च अनुतविसृष्टैस्तन्तुभिर्मध्ये कृतविच्छेदं जालकोपयोगि च।

संस्थानकृतान् दश भेदानाह — **कम्बल इति**। कम्बलः प्रसिद्धः, केचलकः वन्याशिरस्त्राणं, कौचपक इत्यपपाठः। कलमितिका गजोपर्यास्तरणं, कुलमितिकेति क्वचित् पाठः। सौमितिका कलमितिकैव कृष्णवर्णा गजपर्याणोपर्यास्तरणं, तुरगास्तरणं प्रसिद्धं, वर्णकं वर्णकम्बलः, तलिच्छकं कम्बलविशेषः, तलिश्वथकमित्यपि पाठः। वारवाणः कञ्चुकः, परिस्तोमः कम्बलभेदो विस्तारचित्रः, यो विस्तृतवदवभासते निर्माणवैचित्र्यात् स इति व्याचक्षते, कुथ इति त्वेके। समन्तभद्रकं सर्वाङ्गपट्टः, गजादिजघनत्राणमित्यपरे। चशब्दः समुच्चये। इहाविकाधिकारे पुनराविकमिति वचनं वैचित्र्यार्थम्।

गुणानाह — **पिच्छिलमिति**। पिच्छिलमिव श्लक्ष्णमिव भासमानम्, आर्द्रमिव च भासमानं, सूक्ष्मं, मृदु च, श्रेष्ठं भवति।

**अष्टेत्यादि**। अष्टप्रोतिसङ्घात्या प्रोतय एव प्लोतयः खण्डाः तत्सङ्घातनिष्पन्ना, सा कृष्णा कृष्णवर्णा, वर्षवारणं वृष्टिरोधसाधनभूता च, भिङ्गिसी तदाख्यः कम्बलभेदः एकः, अपसारकः काण्डपट इत्यपरः। अनयोर्भेदयोर्गुणात् प्रागनभिधानं गुणासम्बन्धद्योतनार्थम्। इति नैपालकम् अनेन प्रका-

**सम्पुटिका चतुरश्रिका लम्बरा कटवानकं प्रावरकः सत्तलिकेति मृगरोम ।**

**वाङ्गकं श्वेतं स्निग्धं दुकूलं, पौण्ड्रकं श्यामं मणिस्निग्धं, सौवर्णकुड्यकं सूर्यवर्णम् । मणिस्निग्धोदकवानं चतुरश्रवानं व्यामिश्रवानं च ।**

**एतेषामेकांशुकमध्यर्धद्वित्रिचतुरंशुकमिति ।**

---

रेण नेपालदेशभवमाविकं निरूपितमित्यर्थः । नेपालग्रहणाच्च वक्ष्यमाणं मृगरोमादिकमन्यदेशजं सूचितम् ।

षड्विधं मृगरोमजमाह—सम्पुटिकेति । सम्पुटिका जङ्घात्राणं सुवथणाभिधानमिति क्वचिट्टीकादर्शे लिखितं, सन्थनमित्यन्यत्र लिखितं दृश्यते । चतुरश्रिका दशारहिता नवाङ्गुलिचिह्नितकोणा । लम्बरा प्रच्छदपटविशेषः । कटवानकं स एव स्थूलसूत्रो माष्कक इति तद्देशीयानां प्रसिद्ध इति स्वामी । प्रावरकः पूर्वोक्त एवान्यतरतोदशो रोमावर्तक इति तद्देशप्रसिद्ध इति स्वामी । सत्तलिका तूलिकाख्य आस्तरणविशेष इति स्वामी । इति मृगरोम अनेन प्रकारेण मृगरोमजमुक्तम् ।

अथ त्रिप्रकारं दुकूलमाह — वाङ्गकमित्यादि । वाङ्गकं वङ्गदेशभवं, दुकूलं, श्वेतं, स्निग्धं मसृणम् पौण्ड्रकं पुण्ड्रदेशभवं, श्यामं, मणिस्निग्धं मरतकस्निग्धम् । सौवर्णकुड्यकं कामरूपस्थे सुवर्णकुड्याख्ये प्रदेशे भवं, सूर्यवर्णम् उद्यदादित्यद्युति । दुकूलस्य वानमपि त्रिप्रकारमाह — मणीत्यादि । मणिस्निग्धोदकवानं नाम दुकूलस्य साधनद्रव्यं जलेनार्द्रीकृत्य मणिबन्धेनावघृष्य वानं, चतुरश्रवानं वर्णान्तरासंसृष्टं शुद्धं वानं, व्यामिश्रवानं कार्पासकतन्तुमिश्रितैः कौशेयकतन्तुभिर्वानम्, अथवा वर्णान्तरसंसृष्टवानम् । चः समुच्चये ।

एतेषामिति । एतेषां दुकूलानां मध्ये, एकांशुकं तानवानयोरेकतन्तुकम्, अर्थात् प्रशस्तं सूक्ष्मत्वात् । अध्यर्धद्वित्रिचतुरंशुकम् अध्यर्धांशुकं द्व्यंशुकं त्र्यंशुकं चतुरंशुकं च, अर्थादपकृष्टमुत्तरोत्तरं स्थूलत्वात् । तत्र यदेकगुणं तन्यते द्विगुणमूयते द्विगुणं वा तन्यते एकगुणमूयते तदध्यर्धांशुकम् । यद् द्विगुणं तन्यते द्विगुणमूयते तद् द्व्यंशुकम् । यत् त्रिगुणं तन्यते त्रिगुणमूयते तत् त्र्यंशुकम् । यच्चतुर्गुणं तन्यते चतुर्गुणमूयते तच्चतुरंशुकम् । इतिशब्दो दुकूलनिरूपणसमाप्तौ ।

**तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातम्।**

**मागधिका पौण्ड्रिका सौवर्णकुड्यका च पत्रोर्णाः। नागवृक्षो लिकुचो वकुलो वटश्च योनयः। पीतिका नागवृक्षिका, गोधूमवर्णा लैकुची, श्वेता वाकुली, शेषा नवनीतवर्णा।**

**तासां सौवर्णकुड्यका श्रेष्ठा। तया कौशेयं चीनपट्टाश्च चीनभूमिजा व्याख्याताः।**

**माधुरमापरान्तकं कालिङ्गकं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठमिति।**

तेनेति। तेन दुकूलगताध्यर्धांशुकत्वादिनिरूपणेन, काशिकं काशिदेशभवं, पौण्ड्रकं च पुण्ड्रदेशजं च, क्षौमं व्याख्यातं क्षौममेव निरूपितम् अध्यर्धांशुकद्व्यंशुकादिरूपं स्थूलं दुकूलमेव हि क्षौममिति व्यपदिश्यत इत्यभिप्रायः।

मगधपुण्ड्रकसुवर्णकुड्यकाख्यदेशत्रयभवां नागकेसरडहुमद्यगन्धन्यग्रोधाख्यवृक्षचतुष्टययोनिं पत्रोर्णामाह — मागधिकेति। पत्रोर्णाः वृक्षपत्रेषु क्रिमिलालाकृता ऊर्णाः पट्टसूत्रस्य योनयः तासां योनिभेदनिमित्तं गुणभेदमाह — पीतिकेत्यादि। नागवृक्षिका पीतिका नागवृक्षयोनिः पीतवर्णा। लैकुची लिकुचयोनिः। वाकुली वकुलयोनिः। शेषा वटयोनिः।

मागधिकादीनां पत्रोर्णानां मध्ये श्रेष्ठामाह — तासामित्यादि। तयेति। तया पत्रोर्णया, कौशेयं कोशकारभवं, चीनभूमिजाश्चीनपट्टाश्च चीनदेशभवा वस्त्रविशेषाश्च, व्याख्याताः योनितो वर्णतश्च निर्दिष्टाः, तेऽपि पत्रोर्णावन्नागवृक्षादियोनयः पीतकादिवर्णाश्चेत्यभिप्रायः।

कार्पासिकमाह — माधुरमिति। माधुरं मधुरा पाण्ड्यराजधानी तया पाण्ड्यदेशलक्षणात् पाण्ड्यदेशजमित्यर्थः, आपरान्तकम् अपरान्तः कोङ्कणदेशस्तत्प्रभवं, कालिङ्गकं कलिङ्गभवं, काशिकं काशिजं, वाङ्गकं वङ्गजं, वात्सकं वत्सविषयोद्भवं, माहिषकं माहिष्मती कुन्तलदेशराजधानी तया देश लक्षणात् तद्देशभवमित्यर्थः, यद्वा महिषकदेशोत्पन्नं, चः समुच्चये, कार्पासिकं पाण्ड्यादिदेशसप्तकभवं कार्पासतन्तुजं वस्त्रं, श्रेष्ठम्। इतिशब्दः फल्गुसमाप्तौ।

इति फल्गुनिरूपणम्।

अतः परेषां रत्नानां प्रमाणं मूल्यलक्षणम् ।
जातिं रूपं च जानीयान्निधानं नवकर्म च ॥
पुराणप्रतिसंस्कारं कर्मगुह्यमुपस्करान् ।
देशकालपरीभोगं हिंस्राणां च प्रतिक्रियाम् ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
एकादशोऽध्यायः कोशप्रवेश्यरत्नपरीक्षा.
आदितो द्वात्रिंशः ॥

अध्यायान्ते श्लोकावाह—अत इति, पुराणेत्यादि च । अतः अस्मादुक्तात् मौक्तिकादिकार्पासिकान्तात् सप्तदशकात्, परेषामन्येषां, रत्नानां रत्नप्रभृतीनां, प्रमाणं माषकाङ्गुलादिकं तुलामानपौतवदेशकालमानप्रकरणयोर्वक्ष्यमाणं, मूल्यलक्षणं मूल्यं लक्षणं च, तत्र मूल्यं —

"द्वे शते यद् धृतं रत्नं तण्डुलानां प्रमाणतः ।
शतद्वयं सहस्राणां तस्य मूल्यं प्रकीर्तितम् ॥"

इत्युक्तरूपं, लक्षणं प्राशस्त्यं यथा मौक्तिकानां स्थूलनिस्तलादि, अथवा लक्षणं —

"क्षीरकुम्भे मणिः क्षिप्तो यो रञ्जयति तेजसा ।
शुक्लत्वं चोद्धृतो याति तं शुद्धमिति निर्दिशेत् ॥"

इत्युक्तजातीयं, जातिं मुक्तादीनां ताम्रपर्णिकत्वादिकं, रूपं वर्णं षडश्रचतुरश्रादिकं वा, निधानं निधीयमानवस्त्वेकान्तगोपनानुकूलं निधानप्रकारं, नवकर्म च आकरोद्धृतमात्रस्य शोधनवेधनघर्षणादिकं, पुराणप्रतिसंस्कारं पुराणस्य असम्भोगातिभोगादिभिर्विवर्णितस्य बन्धच्युतस्य श्लथबन्धस्य वा नवीकरणं, यदाह —

"अतिभोगादसम्भोगाद् धूमाग्निस्वेदघर्षणात् ।
भूम्यम्बुलवणैश्चापि मुक्तावर्णो विरज्यते ॥"

इति, कर्मगुह्यं कर्मरहस्यं रत्नादीनां वर्णापचारणरञ्जनघर्षणादिकम्, उपस्करान् शाणादीनि रत्नादिकर्मोपकरणानि, देशकालपरीभोगमिति समाहारद्वन्द्वः, तत्र देशकालौ रत्नादीनामुत्पत्तिक्रयविक्रयानुकूलौ, परीभोग उपयोगः शीतयोर्देशकालयोर्मृगरोमजमुपयोज्यम् उष्णयोः कार्पासिकमित्येवंरूपः, हिं-

स्राणां क्षौमाद्युपघातकानां मूषिकादीनां, प्रतिक्रियां मार्जारोत्सर्गादिना प्रतिविधानं कृमिमूषिकादिजग्धानां वस्त्रादीनां सीवनादिना संस्करणं च, जानीयात्, अर्थात् कोशाध्यक्षः ।

एषोऽत्र भट्टस्वामिनः सर्वसङ्ग्रहः ---

"मौक्तिकं मणयो वज्रं प्रवालं च समासतः ।
रत्नं चतुर्विधं प्रोक्तं साराः पञ्चविधा मताः ॥
चन्दनागुरुणी श्रेष्ठे मध्यमं तैलपर्णिकम् ।
भद्रश्रीयं च जानीयात् कालेयकमथेतरत् ॥
चर्माविमृगरोमाणि दुकूलं क्षौमजातयः ।
कार्पासिकं च पत्त्रोर्णं कौशेयं फल्गु चाष्टधा ॥
कुप्यं कुप्यायुधाध्यक्षप्रोक्तमित्यत्र नोदितम् ।
मुक्ताफलाद्यशेषास्तु भेदाः सप्तदशोदिताः ॥" इति ।

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
एकादशोऽध्यायः कोशप्रवेश्यरत्नपरीक्षा,
आदितो द्वात्रिंशः ॥

## ३०. प्रक. आकरकमान्तप्रवर्तनम् ।

**आकराध्यक्षः शुल्बधातुशास्त्ररसपाकमणिरागज्ञस्तज्ज्ञसखो वा तज्जातकर्मकरोपकरणसम्पन्नः किट्टमूषाङ्गारभस्मलिङ्गं वाकरं भूतपूर्वमभूतपूर्वं वा भूमिप्रस्तररसधातुमत्यर्थवर्णगौरवमुग्रगन्धरसं परीक्षेत ।**

**आकरकर्मान्तप्रवर्तनमिति** सूत्रम् । आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु **कर्मान्ताः** तदुपलम्भानुकूलाः क्रियाः आकरकर्मान्ताः तेषां **प्रवर्तनमनुष्ठापनमाकरकर्मान्तप्रवर्तनं,** तदिहाभिधीयत इति सूत्रार्थः ।

'गुप्तपुत्रदारानाकरकर्मान्तेषु वासयेदि'ति पूर्वमुक्तम् । **आकरकर्मान्तास्तु** नोक्ताः, त इदानीमुच्यन्त इति सङ्गतिः ।

**आकराध्यक्ष** इति । शुल्बधातुशास्त्ररसपाकमणिरागज्ञः शुल्बशास्त्रं **भूसिराविज्ञानं** शाकलादि, अथवा शुल्बं ताम्रं तस्य ताम्ररजतहेमता **येनोपदिश्यन्ते** तच्छुल्बशास्त्रं, कनकपञ्चाशीक्रियावादशुल्बशास्त्रमिति स्वामी, **धातुशास्त्रं** धातुभ्यः सर्जिकागन्धकादियुक्त्या सत्त्वपातनोपदेशकं **धातुकौटल्यादिशास्त्रं, रसः** रसबन्धविज्ञानं 'रसोपनिषदाख्यमि'ति स्वामी, पाकः **कनकादीनां वर्णकोत्कर्षणाद्यनुकूलमभिपचनकर्म,** मणिरागः मणीनां **वर्णभेदोत्पादनकर्म,** एषु शुल्बशास्त्रादिषु ज्ञः कोविदः, तज्ज्ञसखो वा **शुल्बशास्त्राद्यभिज्ञसहायश्च,** तज्जातकर्मकरोपकरणसम्पन्नः तज्जातैस्तन्नित्याद्योगिभिः **कर्मकरैः उपकरणैश्च** खनित्रभस्त्रासन्दंशशाणयन्त्रादिभिः सम्पन्न उपेतः, **आकराध्यक्षः, किट्टमूषाङ्गारभस्मलिङ्गं** किट्टं लोहमलं मूषा आवर्तनभाण्डम् **अङ्गारो** भस्म च **लिङ्गं** भूतपूर्वत्वचिह्नं यस्य तं तथाभूतं, भूतपूर्वं पूर्वप्रवृत्तविच्छिन्नम् , **आकरं, परीक्षेत** उक्तलिङ्गदर्शनेन जानीयात् । भूमिप्रस्तररसधातु **भूमिर्मृत्तिका प्रस्तरः** पाषाणः रसः सलिलपारतादिः भूमिप्रस्तररसात्मकाः धातवः **सत्त्वप्रकृतयो** यस्मिंस्तं भूमिधातुकं प्रस्तरधातुकं रसधातुकं चेत्यर्थः, अत्यर्थवर्णगौरवं **वर्णोत्कर्षयुक्तं** भारोत्कर्षयुक्तं च, उग्रगन्धरसं तीव्रगन्धयुक्तं तीव्ररसयुक्तं च, **अभूतपूर्वम्** आकरं वा परीक्षेत नवमाकरं च परीक्षेत, किमाकरगता **धातवः उत्कृष्टसत्त्वा** उतापकृष्टसत्त्वा आहो मध्यमसत्त्वा इति तदीयवर्णगुरुत्वगन्धरसानां **दर्शनतोलनाघ्राणास्वादनैर्निश्चिनुयादित्यभिप्रायः** ।

**पर्वतानामभिज्ञातोद्देशानां बिलगुहोपत्यकालयनगूढखातेष्वन्तः-प्रस्यन्दिनो जम्बूचूततालफलपक्वहरिद्राभेदहरितालक्षौद्रहिङ्गुलकपुण्ड-रीकशुकमयूरपत्त्रवर्णाः** सवर्णोदकौषधिपर्यन्ताश्चिक्कणा **विशदा भारि-काश्च रसाः काञ्चनिकाः ।**

**अप्सु निष्ठ्यूतास्तैलवद्विसर्पिणः पङ्कमलग्राहिणश्च ताम्ररूप्ययोः शतादुपरि वेद्धारः ।**

---

भूमिप्रस्तररसधातुषु रसः परनिर्दिष्टोऽप्यव्यभिचरितफलरूपसुवर्णयो-नित्वेन महाफलत्वादल्पायासत्वाच्चाभ्यर्हित इति कृत्वा तमेव पञ्चप्रकारं प्रथमं निरूपयति — **पर्वतानामिति** । अभिज्ञातोद्देशानाम् अभिज्ञाताः पूर्वभूपप-रिज्ञाताः आकरविद्याधीता वा उद्देशाः येषां तथाभूतानां, पर्वतानां, **बिलगुहो-पत्यकालयनगूढखातेषु** बिलं भूविवरं गुहा देवखातगृहम् उपत्यका शैलासन्न-भूमिः लयनं शिलाटङ्कनकर्मनिर्मितं गृहं गूढखातं महाशिलापिहितद्वारं बिलम् इत्येतेषु पञ्चसु, अन्तःप्रस्यन्दिनः मध्यप्रस्राविणः, **जम्बूचूततालफलपक्वहरिद्रा-भेदहरितालक्षौद्रहिङ्गुलकपुण्डरीकशुकमयूरपत्त्रवर्णाः** जम्बूफलादित्रिकं प्रसिद्धं पक्वहरिद्राभेदः शोधितहरिद्राभङ्गः हरितालं धातुभेदः क्षौद्रं मधु हिङ्गुलको रागद्रव्यविशेषः पुण्डरीकं सिताम्बुजं शुकमयूरपत्त्रे शुकपक्षमयूरपक्षौ जम्बूफ-लादीनां दशानां वर्ण इव वर्णो येषां ते तथाभूताः, **सवर्णोदकौषधिपर्यन्ताः** सवर्णोदकः स्ववर्णसमानवर्णजलः सवर्णौषधिः स्ववर्णसमानवर्णौषधिश्च पर्यन्तः परिसरप्रदेशो येषां ते तथाभूताः, **चिक्कणाः** स्पृष्टहस्तसञ्जिनः, **विशदाः** शुचयः, **भारिकाश्च** गुरवश्च, **रसाः**, **काञ्चनिकाः** काञ्चनं सुवर्णं तत्प्रयोजनाः ।

तेषामेव लक्षणान्तरमाह — **अप्स्विति** । अप्सु निष्ठ्यूता जले क्षिप्ताः, **तैलवद्विसर्पिणः** जले तैलवद् विसर्पणशीलाः, **पङ्कमलग्राहिणश्च** जलगतं पङ्कमा-दाय कतकवदधोगत्वराश्च, यथोक्ताः काञ्चनिकाः रसाः, **ताम्ररूप्ययोरुपरि वेद्धारः** ताम्रस्य रूप्यस्य चोपरि क्षिप्ताः सन्तः जात्यन्तरापादकाः सुवर्णत्वा-पादका इत्यर्थः । वेध्यवेद्ध्रोः योगपरिमाणमाह — **शतादिति** । शतमा-साद्य, ल्यब्लोपे पञ्चमी, तच्च शतं ताम्ररूप्ययोर्वेध्ययोः पलशतं वेद्धुस्तु रसस्य परिमाणम् एकपलात्मकं विशेषाकथनात्, तथाच ताम्रपलशते रूप्य-पलशते वा काञ्चनिकरसो वेधशास्त्रविधिनैकपलः क्षिप्तस्तत्सर्वं स्वर्णीकरोती-

---

१. 'दग्धहरिताळमनःशिलाक्षौ' ग. पाठः.

**तत्प्रतिरूपकमुग्रगन्धरसं शिलाजतु विद्यात् ।**

**पीतकास्ताम्रकास्ताम्रपीतका वा भूमिप्रस्तरधातवो भिन्ना नीलराजीमन्तो मुद्गमाषकृसरवर्णा वा दधिबिन्दुपिण्डचित्रा हरिद्राहरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णा भिन्नाश्चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः सगुलिका अर्चिष्मन्तस्ताप्यमाना न भिद्यन्ते बहुफेनधूमाश्च सुवर्णधातवः प्रतीवापार्थास्ताम्ररूप्यवेधनाः ।**

---

त्युक्तं भवति । इह वेद्धार इति 'विध विधान' इत्यस्मात् तृच्, विधानं च रूपान्तरापादनलक्षणं विवक्षितमिति बोद्धव्यम् ।

तत्समरूपगन्धरसे शिलाजतुनि तद्भ्रमापनोदनार्थमाह -- **तत्प्रतिरूपकमिति** । तत्प्रतिरूपकं तस्य काञ्चनिकरसस्य प्रतिरूपकं सदृशरूपं समानवर्णम्, उग्रगन्धरसं तद्वदुग्रगन्धमुग्ररसं च रसवस्तु, शिलाजतु तत्संज्ञं द्रव्यान्तरं, विद्याद् उपयोगादिना परीक्ष्य निश्चिनुयात् । अथवा रूपगन्धरसमात्रसाम्योक्त्या तैलवद्विसर्पित्वपङ्कमलग्राहित्वयोरभावस्य द्योतनात् तेनैव शिलाजतुत्वमवधारयेदित्यर्थः ।

अथ त्रिविधान् भूमिप्रस्तरधातूनाह — **पीतका** इति । पीतकाः केवलपीताः, ताम्रकाः केवलताम्राः, ताम्रपीतकाः उक्तोभयमिश्राः, वेति विकल्पे, एवं त्रिविधाः, भूमिप्रस्तरधातवः भूमिधातवः प्रस्तरधातवश्च, भिन्ना नीलराजीमन्तः विदारिता मध्ये नीलरेखायुक्ताः, मुद्गमाषकृसरवर्णा वा मुद्गमाषतिलौदनसवर्णाः, वेति विकल्पे । दधिबिन्दुपिण्डचित्राः दधिबिन्दुचित्रा दधिकणाकारैः सूक्ष्मैर्बिन्दुभिराकीर्णाः दधिपिण्डचित्राश्च दधिपिण्डसदृशैः स्थूलबिन्दुभिराकीर्णाश्च, हरिद्राहरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णाः हरिद्रा रजनी हरीतकी पथ्या पद्मपत्रं पद्मदलं शैवलं जलनीली यकृत् कालखण्डाख्यो मांसविशेषः प्लीहा गुल्मः अनवद्यं कुङ्कुमम् एषामिव वर्णो येषां ते तथाविधाः । भिन्नेषु विशेषमाह — भिन्नाः सन्तः, चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः चुञ्चुवालुका सूक्ष्मवालुकेति स्वामी तद्वन्तः लेखा राजयः तद्वन्तः बिन्दुमन्तः स्वस्तिकत्रिकोणरेखाविशेषस्तद्वन्तः, सगुलिकाः गुटिकाकारशर्करोपेताः, अर्चिष्मन्तो दीप्तिमन्तः । परीक्षान्तरमाह — ताप्यमानाः सन्तः न भिद्यन्ते न स्फुटन्ति । कीदृशास्तर्हि भवन्तीत्यत्राह — बहुफेनधूमाः बहुफेनाः बहुधूमाश्च भवन्ति । चशब्दः समुच्चये । एवंलक्षणाः भूमिप्रस्तरधातवः,

**शङ्खकर्पूरस्फटिकनवनीतकपोतपारावतविमलकमयूरग्रीवावर्णाः सस्यकगोमेदकगुडमत्स्यण्डिकावर्णाः कोविदारपद्मपाटलीकलायक्षौमातसीपुष्पवर्णाः ससीसाः साञ्जना विस्रा भिन्नाः श्वेताभाः कृष्णाः कृष्णाभाः श्वेताः सर्वे वा लेखाबिन्दुचित्रा मृदवो ध्मायमाना न स्फुटन्ति बहुफेनधूमाश्च रूप्यधातवः ।**

**सर्वधातूनां गौरववृद्धौ सत्त्ववृद्धिः । तेषामशुद्धा मूढगर्भा वा तीक्ष्णमूत्रक्षारभाविता राजवृक्षवटपीलुगोपित्तरोचनामाहिषखरकरभमूत्र-**

---

प्रतीवापार्थाः प्रतीवापो नाम वेधनद्रव्यस्यावर्तमाने ताम्रे रूप्ये वा चूर्णीकृत्य प्रक्षेपः तदर्थास्तत्प्रयोजनाः, ताम्ररूप्यवेधनाः ताम्रस्य रूप्यस्य वा स्वर्णत्वापादकाः, अत एव सुवर्णधातवः सुवर्णहेतुभूता धातव इत्युच्यन्त इत्यर्थः ।

रूप्यधातूनाह—**शङ्खे**त्यादि । रूप्यधातवः रूप्यहेतवो धातवः, शङ्खवर्णकर्पूरवर्णादयोऽष्टौ सस्यकवर्णगोमेदकवर्णादयश्चत्वारः कोविदारवर्णपद्मवर्णादयः षडित्येवमष्टादशप्रकाराः । तत्र कपोतः आरण्यः कलरवः, पारावतो ग्राम्यः, विमलकः श्वेतरक्तो मणिः । सस्यको नीलमणिः, गुडः पिण्डशर्करा, मत्स्यण्डिका शर्करा । कोविदारस्ताम्रपुष्पाख्यो वृक्षः, पाटली अमोघाख्या, कलायः सतीनकः, क्षौमं क्षुमाभेदः, अतसी उमाख्या । शेषं प्रसिद्धम् । ससीसाः योगेष्टाख्यलोहानुविद्धाः, साञ्जनाः सीसकवच्छुक्लवर्णमञ्जनमिति स्वामी तदनुविद्धाः, विस्राः दुर्गन्धाः, भिन्नाः खण्डिताश्चेत्, श्वेताभाः कृष्णाः श्वेतवर्णाः सन्तो मध्ये कृष्णवर्णाः, कृष्णाभाः श्वेताः कृष्णवर्णाः सन्तो मध्ये श्वेतवर्णाः, सर्वे वा वेति विकल्पे शङ्खादिवर्णा अष्टादशविधा अपि, लेखाबिन्दुचित्राः स्ववर्णभिन्नवर्णाभिर्लेखाभिर्बिन्दुभिश्च चित्राः, मृदवः, ध्मायमाना न स्फुटन्ति ताप्यमाना न भिद्यन्ते, बहुफेनधूमाश्च भवन्ति ।

**सर्वधातूना**मिति । सर्वधातूनां सर्वेषामुक्तानां वक्ष्यमाणानां च धातूनां, गौरववृद्धौ गुरुत्वोत्कर्षे सति, सत्त्ववृद्धिः सत्त्वं धातुगतः सारः तस्य वृद्धिः, भवति । अशुद्धानामनभिव्यक्तसत्त्वानां च धातूनां शोधनप्रकारमाह—**तेषा**मिति । तेषां धातूनां मध्ये, अशुद्धाः अशुद्धद्रव्यान्तरसंसर्गदुष्टाः, मूढगर्भा वा स्वदोषादेवाप्रकाशमानसत्त्वा वा धातवः, तीक्ष्णमूत्रक्षारभाविताः

**लण्डपिण्डबद्धास्तत्प्रतीवापास्तदवलेपा वा विशुद्धाः स्रवन्ति ।**

**यवमाषतिलपलाशपीलुक्षारैर्गोक्षीराजक्षीरैर्वा कदलीवज्रकन्दप्रतीवापो मार्दवकरः ।**

**मधु मधुकमजापयः सतैलं घृतगुडकिण्वयुतं सकन्दलीकम् ।**
**यदपि शतसहस्रधा विभिन्नं भवति मृदु त्रिभिरेव तन्निषेकैः ॥**

**गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः ।**

तीक्ष्णमूत्रं नरमूत्रमित्येके गजाश्वगोगर्दभच्छागमूत्रमित्यपरे इति स्वामी तीक्ष्णक्षारः कदल्यपामार्गादिभस्म ताभ्यां भाविताः असकृत् सेचनादिना संस्कृताः, राजवृक्षवटपीलुगोपित्तरोचनामहिषखरकरभमूत्रलण्डपिण्डबद्धाः राजवृक्षः शम्याकः वटः प्रसिद्धः पीलुर्गुडफलाख्यो वृक्षः गोपित्तरोचना गोपित्तं गोरोचना च महिषखरकरभमूत्रलण्डं सैरिभगर्दभबालोष्ट्राणां मूत्रपुरीषम् एतैः पिण्डबद्धाः राजवृक्षादिकल्कैर्महिषादिमूत्रलण्डेन च सह मिश्रितैरुक्ततीक्ष्णमूत्रक्षारभावितस्यात्मनश्चूर्णैर्बद्धपिण्डा इत्यर्थः, तत्प्रतीवापाः राजवृक्षादिचूर्णकृतप्रतीवापाः, तदवलेपा वा तच्चूर्णकृतोपलेपा वा सन्तः, विशुद्धाः द्रव्यान्तरसंसर्गजदोषनिर्मुक्ताः, स्रवन्ति मूढगर्भतापहानेन सत्त्वमुद्गिरन्ति ।

यवमाषतिलपलाशपीलुभस्मभिर्गोक्षीराजक्षीरैश्च सम्मिश्रिताभ्यां कदलीकन्दवनसूरणकन्दाभ्यां प्रतीवापात् स्वर्णरूप्ययोर्मार्दवमुपजायत इत्याह— **यवमाषे**त्यादि । इह वेत्यन्तस्य विशुद्धाः स्रवन्तीत्यनेन सम्बन्धं मत्वा यवक्षारादिभिः साधनैः पूर्ववत् पिण्डबन्धनादिविधया वा धातवो विशुद्धाः स्रवन्तीत्यर्थं केचिद् वर्णयन्ति ।

मृदूकारप्रकारान्तरं श्लोकेनाह— **मधुमधुकमि**ति । सतैलं, घृतगुडकिण्वयुतं सर्पिश्शर्करासुराबीजसहितं, सकन्दलीकं कच्छजझाटभेदयुक्तं, यत्, मधु क्षौद्रं, मधुकं यष्टयाख्यम्, अजापयः छागीक्षीरं च, त्रिभिरेव, तन्निषेकैः निषेको नाम स्वर्णादावौषधकल्कनिक्षेपः मध्वाद्यष्टककल्कनिक्षेपैः, शतसहस्रधा विभिन्नमपि नानाप्रकारकाठिन्ययुक्तमपि स्वर्णादिकं, मृदु भवति ॥

मार्दवापायकरमाह—**गोदन्ते**त्यादि । गोदन्तशृङ्गप्रतीवापः गोर्दन्तशृङ्गचूर्णयोर्द्रुतसुवर्णाद्युपरि प्रक्षेपः, मृदुस्तम्भनः मार्दवविलोपनो भवति । इति स्वर्णरूप्यधातुप्रकरणम् ।

**भारिकः स्निग्धो मृदुश्च प्रस्तरधातुर्भूमिभागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्रधातुः ।**

**काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रः सीसधातुः ।**

**ऊषरकर्बुरः पक्वलोष्टवर्णो वा त्रपुधातुः ।**

**कुरुम्बः पाण्डुरोहितः सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः ।**

**काकाण्डभुजपत्रवर्णो वा वैकृन्तकधातुः ।**

**अच्छः स्निग्धः सप्रभो घोषवान् शीततीव्रस्तनुरागश्च मणिधातुः ।**

---

अथ ताम्रधातुमाह— **भारिक** इति । भारिकः गुरुः, स्निग्धो मसृणः, मृदुश्च, प्रस्तरधातुः पाषाणधातुः, भूमिभागो वा भूमिधातुर्वा, ताम्रधातुः ताम्रयोनिर्भवति । तस्य चतुर्विधान् वर्णानाह — पिङ्गलः कपिलः, हरितो नीलः, पाटल ईषद्रक्तः, लोहितो वा रक्तो वा ।

सीसधातुमाह—**काकेत्यादि** । काकमेचकः काक इव कृष्णः, कपोतरोचनावर्णः कपोतवर्णो गोरोचनावर्णश्च, श्वेतराजिनद्धः धवललेखाबहुलः, विस्रो वा दुर्गन्धो वा, सीसधातुः सीससंज्ञलोहयोनिर्धातुर्भवति ।

त्रपुसंज्ञस्य शुक्लसीसस्य योनिं धातुमाह— **ऊषरेत्यादि** । ऊषरकर्बुरः ऊषरदेशवदापाण्डुः, पक्वलोष्टवर्णो वा, त्रपुधातुः ।

अयोधातुमाह —**कुरुम्ब** इति । कुरुम्बः श्लक्ष्णपाषाणप्रायः इति स्वामी, पाण्डुरोहितः श्वेतरक्तः, सिन्दुवारपुष्पवर्णो निर्गुण्डीपुष्पवर्णः, वेति विकल्पे, तीक्ष्णधातुः तीक्ष्णम् अयः तद्योनिर्धातुर्भवति ।

वैकृन्तकधातुमाह—**काकाण्डेत्यादि** । काकाण्डभुजपत्रवर्णो वा काकाण्डवर्णो भूर्जपत्रवर्णो वा, क्वचिद् भूर्जेत्येव पाठः । काण्डेति पाठे काण्डो वृक्षजातिविशेष इति व्याख्येयम् । वैकृन्तकधातुः वैकृन्तकाख्यलोहविशेषयोनिर्धातुः । कांस्यादिकं तु तमरकादियुक्तताम्रादिनिष्पाद्यमिति तस्य न धात्वन्तरमस्ति । एवं लोहधातवः सप्ताभिहिताः ।

अथ मणिधातूनाह — **अच्छ** इति । अच्छो बिम्बग्राही, स्निग्धो मसृणः, सप्रभः सद्युतिः, घोषवान् अभितापने टङ्कच्छेदने च महाशब्दः,

**धातुसमुत्थं तज्जातकर्मान्तेषु प्रयोजयेत् ।**

**कृतभाण्डव्यवहारमेकमुखम्, अत्ययं चान्यत्रकर्तृक्रेतृविक्रेतृणां स्थापयेत् ।**

**आकरिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः ।**

**स्तेनमनिसृष्टोपजीविनं च बद्धा कर्म कारयेद्, दण्डोपकारिणं च ।**

---

शीततीव्रः अतिशीतस्वभावः अग्नेरपनयने क्षिप्रशीतो वा, तनुरागः अल्परागः, मणिधातुः मणियोनिर्धातुर्भवति । इयमत्र संग्रहार्या —

"कनकं रूप्यं ताम्रं सीसं त्रपु तीक्ष्णकं च वैकृन्तम् ।
मणयोऽष्टौ निर्दिष्टा अष्टानां धातवोऽप्यष्टौ ॥" इति ।

इत्थं धातुपरीक्षामुपदिश्य तत्कर्मान्तप्रवर्तनमधिकृत्याह — **धातुसमुत्थमिति** । धातुसमुत्थितमित्यपि पाठः । धातुभ्यः स्वल्पधनव्यययत्नेन प्रथममुत्पन्नं स्वर्णादिद्रव्यं, तज्जातकर्मान्तेषु धातुसम्बद्धकर्मस्थानेषु स्वर्णरूप्याद्याकरेषु, प्रयोजयेत् विनियुञ्जीत बहुतरोत्पत्त्यर्थम् । विनियोज्यस्य धातुसमुत्थत्ववचनं पूर्वपूर्वसम्यक्प्रवृत्तिफलोपलम्भे सत्येवोत्तरोत्तरप्रवृत्तिः कार्येति द्योतयितुम् ।

**कृतेत्यादि** । कृतभाण्डव्यवहारं घटितसुवर्णादिभाण्डविक्रयम्, **एकमुखम्** एकद्वारकमेकविक्रयस्थानकं, स्थापयेत् प्रख्यापयेत् । **अन्यत्रकर्तृक्रेतृविक्रेतृणां** स्थापितान्यदेशे भाण्डक्रियाक्रयविक्रयकारिणाम्, अत्ययं च दण्डं च 'पञ्चविंशतिपणमत्ययं चान्यत्रकर्तृक्रेतृविक्रेतृपरीक्षितृभ्य' इति लक्षणाध्यक्षोक्तं, स्थापयेत् । दण्ड इह द्रव्यसारतारतम्यापेक्षः शुल्काध्यक्ष-धर्मस्थीय-कण्टकशोधनोक्तोऽपराधानुरूपः कल्पनीयः प्रमाणाकथनादिति केचित् ।

**आकरिकमिति** । अपहरन्तम् आकराद् द्रव्यं हरन्तं, आकरिकम् आकरकर्मकरम्, अष्टगुणम् अपहृतद्रव्याष्टगुणमत्ययं दापयेत् । तत्रापवादमाह — **अन्यत्र रत्नेभ्य** इति । रत्नापहारे तु नायं दण्डः, किन्तु घातो वक्ष्यते ।

**स्तेनमिति** । स्तेनम् आकरिकमनाकरिकं वा चोरम्, अनिसृष्टोपजीविनं च विना राजानुमतिं धातुवादविद्यया वृत्तिं वर्तयन्तं च, बद्ध्वा निगडितं कृत्वा, बद्धमिति पाठेऽप्ययमेवार्थः, कर्म आकरव्यापारं, कारयेत् । दण्डोपकारिणं च महापराधेषु प्राड्विवाकानिर्णीतो देहदण्डप्रतिनिधिर्धनदण्डो

**व्ययक्रियाभारिकमाकरं भागेन प्रक्रयेण वा दद्यात्, लाघविकमात्मना कारयेत् ।**

**लोहाध्यक्षः ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् कारयेत्, लोहभाण्डव्यवहारं च ।**

**लक्षणाध्यक्षः चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतममाषबीजयुक्तं कारयेत् पणम्, अर्धपणं पादमष्टभागमिति ।**

---

देहपीडापरिहारार्थत्वादपराधिनं प्रति उपकारो भवतीति दण्डोपकारः स उच्यते तद्वन्तं च अर्थाददत्तदण्डं, बद्ध्वा कर्म कारयेत् ।

व्ययक्रियेत्यादि । व्ययक्रियाभारिकं व्ययक्रिययोर्भारिकं गुरुं गुरुधनव्ययसाध्यं गुरुप्रयत्नसाध्यं चेत्यर्थः, आकरं, भागेन दद्याद् व्ययलाभभागव्यवस्थया परेषां प्रतिपादयेत् । प्रक्रयेण वा दद्यात् अस्याकरस्यैतावत् सुवर्णादिकं राजार्थे देयमिति परिपण्य वा परेषां दद्यात् । लाघविकं लघुव्ययसाध्यं लघुश्रमसाध्यं चाकरम्, आत्मना कारयेत् स्वयं व्यापारयेत् ।

अथावान्तराध्यक्षव्यापारमाह — **लोहाध्यक्ष** इति । लोहाध्यक्षः सुवर्णरूप्ययोर्वक्ष्यमाणत्वात् तदतिरिक्तं ताम्रादिकमिह लोहः तदध्यक्षः, ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् आरकूटो रीतिः वृत्तं तदाख्यो लोहः कंसो घोषाख्यः तालः कांस्यं सातिशयनादयुक्तं वाद्योपयोगि लोहः कालायसं ताम्रादीनां कर्मान्तान् तद्भाण्डघटनकर्माणि, कारयेत् । लोहभाण्डव्यवहारं च ताम्रादिनिर्मितभाण्डक्रयविक्रयव्यवहारं च कारयेत् ।

अथ पण्यव्यवहारार्थं लक्षणाध्यक्षव्यापारमाह—**लक्षणे**त्यादि । लक्षणाध्यक्षः लक्षणं पणमाषकादिरूपनिर्माणं तदध्यक्षः टङ्कशालाध्यक्ष इति यावत् । पणव्यवहारश्च रूप्यरूपश्चतुर्विधः ताम्ररूपश्चतुर्विधः इत्यष्टविधे तस्मिन् रूप्यरूपः चतुर्भागताम्रमित्यादिना, ताम्ररूपश्च पादाजीवमित्यादिना व्युत्पाद्यते । षोडशमाषको हि पणः प्रसिद्धः, तस्य चतुर्भागश्चत्वारो माषाः तत्प्रमाणं ताम्रं यस्य तथाविधं, तीक्ष्णत्रपुसीसाञ्जनानामन्यतममाषबीजयुक्तं तीक्ष्णं कालायसं त्रपु रङ्गं सीसं योगेष्टाख्यम् अञ्जनं रसाञ्जनम् एषां चतुर्णामन्यतमस्य माषप्रमाणेन बीजेन निर्माणार्थेन युक्तम्, अर्थात् परिशिष्टैकादशमाषपरिमाणरूप्यकं, रूप्यरूपं रूप्यांशभूम्ना रूप्यमयं, पणं पणसंज्ञं नाणकविशेषं, कारयेत् । इति उक्तेन प्रकारेण, अर्धपणं पादम् अष्टभागं

**पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति ।**

**रूपदर्शकः पणयात्रां व्यवहारिकीं कोशप्रवेश्यां च स्थापयेत् । रूपिकमष्टकं शतं, पञ्चकं शतं व्याजीं, पारीक्षिकमष्टभागिकं शतम् । पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः ।**

---

कारयेत् पणोक्तताम्राद्यर्धप्रमाणयोगेनार्धपणाख्यं तच्चतुर्भागप्रमाणयोगेन पादपणं तदष्टभागप्रमाणयोगेनाष्टभागाख्यं च निर्मापयेदित्यर्थः । प्रकारान्तरार्थो वा इतिशब्दः इति कारयेदिति योज्यः, त्रिपादकादिकं प्रकारान्तरमपि व्यवहारानुगुणं निर्मापयेदित्यर्थः । पादाजीवं रूप्यरूपचतुर्भागव्यवहार्यं, ताम्ररूपं ताम्रांशभूम्ना ताम्रमयं रूपं, माषकं माषकाख्यं कारयेत् । ताम्रस्यैकादश धान्यमाषाः रूप्यस्य चत्वारस्तीक्ष्णाद्यन्यतमस्यैक इति योगप्रमाणेन रूप्यरूपपणवत् षोडशधान्यमाषप्रमाणकोऽयं ताम्ररूपमाषको द्रष्टव्यः । एवं माषकोक्तताम्राद्यर्धप्रमाणयोगेनार्धमाषकं तच्चतुर्भागप्रमाणयोगेन काकणीं, तदष्टभागप्रमाणयोगेनार्धकाकणीं च कारयेत् ।

**रूपदर्शक** इति । रूपदर्शकः रूपपरीक्षकः, पणयात्रां पणदानादानप्रस्थानं, व्यवहारिकीं व्यवहारप्रयोजनां, कोशप्रवेश्यां च कोशप्रवेशनयोग्यां च, स्थापयेद् ईदृशी पणयात्रा व्यवहारार्था ईदृशी कोशप्रवेशनार्थेति तत्सारासारभावपर्यालोचनया व्यवस्थापयेत् । इयं राजकर्तृका पणयात्रा । जानपदकारितायां तस्यां राजभाव्यमाह — **रूपिकमि**त्यादि । अष्टास्योपदा दीयते अष्टकं पञ्चास्योपदा दीयते पञ्चकम् । अष्टकं शतं पणशतेऽष्टपणग्रहणं रूपिकसंज्ञं, पणशते पञ्चपणग्रहणं व्याजीसंज्ञं, पणशतेऽष्टभागग्रहणं पारीक्षिकसंज्ञम् । रूपिकं व्याजीं पारीक्षिकं च यथोक्तलक्षणं स्थापयेद् व्यवस्थापयेत । तत्र रूपिकं कर्मकरभृतिः, व्याजी राजभागः, पारीक्षिकं परीक्षकभृतिरिति बोद्धव्यम् । पञ्चविंशतिपणम्, अत्ययं च दण्डं च स्थापयेद्, अर्थादपराधे सति । स चापराधः सन्निहिताष्टभागिकपदानुकर्षणेनाष्टभागभवं दण्डमिति व्याख्यानादष्टभागापहारलक्षणो द्रष्टव्यः । अनया दिशा चतुर्भागाद्यपहारे दण्डद्वैगुण्यादिकमुन्नेयम् । केष्वपराधिषु विषयेऽयं दण्ड इत्याकाङ्क्षायामाह — **अन्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्य** इति । ये करणक्रयणादावधिकृतास्तदतिरिक्तेषु विषये । ते च जानपदा अध्यक्षपुरुषकर्मकरा वेत्यवसेयम् । अन्यत्रकर्त्रादीनां त्वपराधे द्रव्यसारासारतापेक्षो दण्डः प्रागुक्त एव ।

**खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् कारयेत् पणनव्यवहारं च ।**

**लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं सङ्गृह्णीयाद्, विक्रयाच्च मूल्यं रूपं व्याजीं च ।**

**आगन्तुलवणं षड्भागं दद्यात् । दत्तभागविभागस्य विक्रयः । पञ्चकं शतं व्याजीं, रूपं, रूपिकं च । क्रेता शुल्कं, राजपण्यच्छेदानु-**

---

भट्टस्वामी त्वाह — 'तेषां खन्यत्रकर्त्रादीनामुक्त एव दण्डः "कूटसुरूपकं कुर्वतः कारयतो निपातयतो वा सहस्रदण्ड" इति' इति । ईदृशं मूलवाक्यं मृग्यम् ।

अथ खन्यध्यक्षव्यापारमाह — **खन्यध्यक्ष** इत्यादि । खन्यध्यक्षः स्वर्णरत्नाद्याकराधिकारी, शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् शङ्खानां कर्मान्तान् पाटनघर्षणादिक्रियाः वज्रमणिमुक्ताप्रवालानां कर्मान्तान् खननशोधनरञ्जनादिक्रियाः क्षाराणां कर्मान्तान् यवक्षारादीनाम् उत्पादनादिक्रियाश्च, कारयेत् । पणनव्यवहारं च शङ्खादिक्रयविक्रयव्यवहारं च कारयेत् ।

लवणाध्यक्षव्यापारमाह—**लवणे**त्यादि । लवणाध्यक्षः, पाकमुक्तं परिणतं निष्पन्नं, लवणभागं भागार्पिताकरलभ्यं लवणस्य भागं, प्रक्रयं च प्रक्रयः परिपणः अमुकाकरस्यैतावल्लवणं देयमिति परिभाष्यार्पितादाकराल्लभ्यं चेत्यर्थः, यथाकालं क्लृप्तकालानतिक्रमेण, संगृह्णीयात् । तदिदं राजपण्यं वणिग्भिर्विक्रेतव्यम् । **विक्रयाच्चे**ति । विक्रयाच्च तद्विक्रयलब्धद्रव्याच्च, मूल्यं पण्यमूल्यं, रूपं पारीक्षिकमष्टभागिकलक्षणं, व्याजीं च पुनर्मीयमानोनतापरिहारार्थमधिकतया गृह्यमाणां मानव्याजीं च, संगृह्णीयादिति वर्तते ।

इत्थं राजपण्यसम्बद्धमभिधायागन्तुकपण्यसम्बद्धमाह— **आगन्तुलवणमिति** । आगन्तुलवणं परदेशागतं लवणम्, अर्थात् तद्विक्रेता, षड्भागं दद्यात् षष्ठं भागं राज्ञे दद्यात् । दत्तभागविभागस्य दत्तो राज्ञेऽर्पितः भागः षड्भागो विभागो मानव्याजी च येन तस्यागन्तुलवणव्यवहारिणः, विक्रयो भवति । विक्रये इति सप्तम्यन्तपाठस्तु श्रेयान् उत्तरग्रन्थेनैकवाक्यत्वस्य स्वरसतो लाभात् । न केवलं षड्भाग-मानव्याज्योर्द्वयोरेव दानं, किन्त्वन्येषामपि त्रयाणां तद् भवतीत्याह — **पञ्चकमित्या**दि । पणशते पणपञ्चकलक्षणां व्याजीं, पारीक्षिकं शतस्याष्टभागिकलक्षणं रूपशब्दवाच्यं, पणशते पणाष्टक-

**रूपं च वैधरणं दद्यात् । अन्यत्रक्रेता षट्छतमत्ययं च ।**

**विलवणमुत्तमं दण्डं दद्यात्, अनिसृष्टोपजीवी च अन्यत्र वानप्रस्थेभ्यः । श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः ।**

**अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात् ।**

**एवं मूल्यं विभागं च व्याजीं परिघमत्ययम् ।**
**शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च ॥**
**खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत् ।**
**एवं सर्वेषु पण्येषु स्थापयेन्मुखसङ्ग्रहम् ॥**

---

लक्षणं रूपिकसंज्ञं च, दद्यादित्यनुषज्यते । **क्रेतेति** । क्रेता शुल्कं दद्यात्, नतु विक्रेता । राजपण्यच्छेदानुरूपं राजपण्याद् विक्रीयमाणाद् यश्छेदः यावन्नष्टं तदनुरूपं, वैधरणं वैधरणशब्दितं छिन्नपूरणं च दद्यात् । अन्यत्रक्रेता विद्यमाने राजपण्येऽन्यतो लवणं क्रीणानः, षट्छतम्, अत्ययं च दण्डं च, दद्यात् ।

**विलवणमिति** । विलवणं विड(कृतकलवण)मृदादिमिश्रं लवणम्, अर्थात् तथाविधलवणव्यवहर्ता, उत्तमं दण्डम् उत्तमसाहसं, दद्यात् । अनिसृष्टोपजीवी च यो राजाननुमत एव लवणमुत्पाद्योपजीवति स च, उत्तमं दण्डं दद्यात् । तत्रापवादमाह — वानप्रस्थेभ्योऽन्यत्र वानप्रस्थान् विहाय । तेषां त्वनिसृष्टोपजीविनां न दण्ड इत्यर्थः । **श्रोत्रिया** इति । श्रोत्रियाः वेदाध्यायिनः, तपस्विनः दीनाः, विष्टयः हठकारितकर्मकारिणश्च, भक्तलवणम् अन्नाभ्यवहारमात्रपर्याप्तं लवणं, हरेयुः विनैव शुल्कं नयेयुः ।

**अत** इति । अतोऽन्यः उक्तादितरः, लवणक्षारवर्गः 'सैन्धव-सामुद्र-विड-यवक्षार-सौवर्चलोद्भिदजा लवणवर्गः' इति 'फाणित-गुड-मत्स्यण्डिका-खण्ड-शर्कराः क्षारवर्गः' इति च कोष्ठागाराध्यक्षे वक्ष्यमाणो लवणवर्गः क्षारवर्गश्च, अर्थात् तत्कर्ता, शुल्कं दद्यात् शुल्कमेव दद्यान्न तु व्याज्यादिकमित्यर्थः ।

अथ श्लोकानाह — **एवमित्यादि** । एवम् उक्तप्रकारेण, खनिभ्यः, मूल्यं प्रतीतं, विभागं षड्भागं, व्याजीं पञ्चकं शतं मानव्याजीत्युभयविधां, परिघं पारीक्षिकं धातुसमुत्थितानां तज्जातकर्मान्तेषु प्रयोगात् सिद्धं लाभविशेषं वा, अत्ययम् आश्रावितं दमं, शुल्कं प्रतीतं, वैधरणं छिन्नपूरणं, दण्डम्

मार्जारश्वनकुलसर्पप्रेतानां नगरस्यान्तरुत्सर्गे त्रिपणो दण्डः खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः। मनुष्यप्रेतानां पञ्चाशत्पणः।

मार्गविपर्यासे शवद्वारादन्यतः शवनिर्णयने पूर्वः साहसदण्डः। द्वाःस्थानां द्विशतम्। श्मशानादन्यत्र न्यासे दहने च द्वादशपणो दण्डः।

विषण्नालिकमुभयतोरात्रं यामतूर्यम्। तूर्यशब्दे राज्ञो गृहाभ्याशे सपादपणमक्षणताडनम् प्रथमपश्चिमयामिकम्। मध्यमयामिकं द्विगुणम्। बहिश्चतुर्गुणम्।

---

मार्जारेत्यादिवाक्यत्रयमतिरोहितार्थम्।

**मार्गेत्यादि**। मार्गविपर्यासे प्रसिद्धमार्गादन्येन मार्गेण शवानां नयने, शवद्वारादन्यतः शवनिर्णयने व्यवस्थितप्रेतनिर्हरणद्वारातिरिक्तद्वारेण प्रेतनिर्हरणे, पूर्वः साहसदण्डः। द्वाःस्थानां द्वाररक्षिणां द्वारान्तरनिर्णयनमप्रतिषेधतां, द्विशतं पणद्विशतदण्डः। **श्मशानादित्यादि**। न्यासे स्थापने, स च बालानाथादीनाम्। शेषं स्पष्टम्।

**विषण्नालिकमिति**। यामतूर्यं यामे यन्त्रणीयजनसञ्चारे प्रहरे भवं तूर्यं तत्सञ्चारनिरोधसूचकं वाद्यघोषणं यामतूर्यं, तत्, उभयतोरात्रं रात्रेरुभयोः पार्श्वयोः, अर्थात् प्रथमपश्चिमयामयोः कर्तव्यमिति शेषः। तत्रापि घटिकानियमार्थमाह — विषण्नालिकं विवर्जिताः षट् नालिकाः रात्रिपूर्वपश्चिमभागसंबन्धिन्यो यस्मिंस्तद् यथा भवति तथा, रात्रेरादितः षट्सु घटिकास्वतीतासु अन्ततश्च षट्सु घटिकास्ववशिष्टास्वित्यर्थः। इह उभयतोरात्रमिति रात्रिमुभयत इत्यर्थेऽव्ययीभावः समासान्तश्चार्षः। **तूर्यशब्द इति**। श्रूयमाणे, राज्ञो, गृहाभ्याशे गृहसमीपे सञ्चरतामिति शेषः, सपादपणम् अक्षणताडनं पादाधिकपणोऽकालसञ्चारदण्डः भवति। तच्चाक्षणसञ्चारदण्डनं किं सर्वरात्रियामविषयं, नेत्याह—प्रथमपश्चिमयामिकं प्रथमयामशेषसञ्चारविषयं पश्चिमयामशेषसञ्चारविषयं चेत्यर्थः। द्वितीयतृतीययामसञ्चारविषयमाह—**मध्यमेत्यादि**। मध्यमयामिकम् अक्षणताडनं, द्विगुणम् अर्धतृतीयपणम्। इदं सर्वं नगरान्तःसञ्चारविषयं, नगरबहिर्देशसञ्चारविषयमाह — **बहिरिति**। बहिर्नगराद् बहिर्नगरपरिसरदेशे, चतुर्गुणं राजगृहाभ्याशसञ्चारोक्तदण्डचतुर्गुणम् अर्थात् पञ्चपणात्मकम् अक्षणताडनं भवति।

**शङ्कनीये देशे लिङ्गे पूर्वापदाने च गृहीतमनुयुञ्जीत ।**

**राजपरिग्रहोपगमने नगररक्षारोहणे च मध्यमः साहसदण्डः ।**

**सूतिकाचिकित्सकप्रेतप्रदीपयाननागरिकतूर्यप्रेक्षाग्निनिमित्तं मुद्राभिश्चाग्राह्याः ।**

**चाररात्रिषु प्रच्छन्नविपरीतवेषाः प्रव्राजिता दण्डशस्त्रहस्ताश्च मनुष्या दोषतो दण्ड्याः ।**

---

**शङ्कनीय** इति । शङ्कन्तेऽस्मिन् स्थितं पुरुषं चोरजारादित्वेनेति शङ्कनीयः तथाभूते सति, देशे निष्कुटादौ, शङ्कनीये लिङ्गे अवगुण्ठनकुड्यच्छायानिलयनादिके सति, पूर्वापदाने च पूर्वकृते चौर्यादिवृत्ते च प्रतीते सति, गृहीतम् अनुयुञ्जीत तद्देशस्थं तल्लिङ्गिनं तदपदानकं च जनं दृष्टं गृहीत्वा पृच्छेत् — कस्त्वं कुतः कस्य किमर्थमिहागतोऽसीति ।

**राजपरिग्रहोपगमन** इति । राजकीयावसथोद्यानादिष्वननुमतस्य प्रवेशने, नगररक्षारोहणे च नगररक्षाणां प्राकाराट्टालकादीनामारोहणे च, मध्यमः साहसदण्डः ।

**सूतिकेत्यादि** । सूतिकादिसप्तकनिमित्तं सूतिका प्रसूता तत्पदेन तच्छुश्रूषणं लक्ष्यते । सूतिकानिमित्तं सूतिकाशुश्रूषणे निमित्ते चिकित्सकनिमित्तं चिकित्सकपरिचरणे निमित्ते प्रेतनिमित्तं शवनिर्हरणे निमित्ते प्रदीपयाननिमित्तं दीपेनात्मानं प्रकाश्य गमने निमित्ते नागरिकतूर्यनिमित्तं नागरजनसमूहनचिह्नतूर्यवादने निमित्ते प्रेक्षानिमित्तं राजानुज्ञातनाटकादिप्रयोगदर्शने निमित्ते अग्निनिमित्तं च स्वपरगृहाद्यग्निदीपने निमित्ते च अग्निग्रहणस्योपलक्षणार्थत्वादन्यस्मिन्नपि भयहेतौ निमित्ते, अग्राह्याः अक्षणसञ्चारिणो न ग्राह्याः । किन्तु निमित्तं परीक्ष्य मोक्तव्या इत्यर्थः । तथा मुद्राभिश्चाग्राह्याः मन्त्रिनागरिकादिमुद्रोपेताश्चाक्षणचारिणो न ग्राह्याः ।

**चाररात्रिष्विति** । चारः सर्वसञ्चारः तत्सम्बन्धिनीषु रात्रिषु अनुमतसर्वसञ्चारासु महोत्सवादिरात्रिष्वित्यर्थः, प्रच्छन्नविपरीतवेषाः प्रच्छन्ना अवगुण्ठनादिसंवृतस्वरूपाः विपरीतवेषाः पुंवेषाः स्त्रियः स्त्रीवेषाः पुरुषाश्च राजाज्ञानिष्कासिताः, प्रव्रजिताः परिव्राजकाः, दण्डशस्त्रहस्ताश्च दण्डपाणयः शस्त्रपाणयश्च, मनुष्याः, दोषतो दण्ड्याः परीक्ष्य यथादोषोपलम्भं दण्डनीयाः ।

रक्षिणामवार्यं वारयतां वार्यं चावारयतामक्षणद्विगुणो दण्डः । स्त्रियं दासीमधिमेहयतां पूर्वः साहसदण्डः, अदासीं मध्यमः, कृतावरोधामुत्तमः, कुलस्त्रियं वधः ।

चेतनाचेतनिकं रात्रिदोषमशंसतो नागरिकस्य दोषानुरूपो दण्डः, प्रमादस्थाने च ।

नित्यमुदकस्थानमार्गभूमिच्छन्नपथवप्रप्राकाररक्षावेक्षणं, नष्टप्रस्मृतापसृतानां च रक्षणम् ।

बन्धनागारे च बालवृद्धव्याधितानाथानां जातनक्षत्रपौर्णमासीषु विसर्गः । पुण्यशीलाः समयानुबद्धा वा दोषनिष्क्रयं दद्युः ।

---

**रक्षिणामिति** । अवार्यम् अभ्यनुज्ञाताक्षणसञ्चारं सूतिकाशुश्रूषुप्रभृतिं, वारयतां, वार्यं च सामान्यजनम्, अवारयतां, रक्षिणां नागरिकपुरुषाणाम्, अक्षणद्विगुणः अक्षणसञ्चारविहितदण्डाद्द्विगुणः सार्धपणद्वयात्मकः, दण्डः । स्त्रियं दासीम् अन्यदीयाम्, अधिमेहयतां बलाद् गच्छतां रक्षिणां, पूर्वः साहसदण्डः । अदासीं गणिकाम् अधिमेहयतां, मध्यमः साहसदण्डः । कृतावरोधां दासीमदासीं वा केनचिद् भार्यात्वेन परिगृहीताम्, अधिमेहयताम्, उत्तमः साहसदण्डः । कुलस्त्रियम्, अधिमेहयतां, वधः प्राणवियोजनं दण्डः ।

**चेतनाचेतनिकमिति** । चेतनभवमचेतनभवं च, रात्रिदोषं रात्रिदृष्टममङ्गलम्, अशंसतः अनिवेदयतः, नागरिकस्य पौरस्य, दोषानुरूपो दण्डः कल्प्यः । प्रमादस्थाने च प्रमादो रक्षिपुरुषाणां रक्षाव्यापारशैथिल्यं तस्य स्थाने, हेतुभूते मद्यपानादौ च, दोषानुरूपो दण्डः ।

**नित्यमिति** । उदकस्थानानि नदीकूपतटाकादीनि, मार्गाः प्रवेशनिर्गमद्वाराणि, भूमयः स्थलानि, छन्नपथाः सुरुङ्गादिमार्गाः, वप्राः प्राकाराधाराः, प्राकारा वरणाः, रक्षाः अट्टालकपरिखादयः, एषामुदकस्थानादीनां सप्तपदार्थानामवेक्षणं परीक्षणं, नित्यं प्रतिदिवसानुष्ठेयं कर्म भवति नागरिकस्य । नष्टप्रस्मृतापसृतानां च नष्टानां स्वामिप्रमादगलितानां भूषणादीनां प्रस्मृतानां स्वामिविस्मृतानाम् अपसृतानां स्वयमपगतानां द्विपदचतुष्पदानां च, रक्षणं, नित्यं नियतानुष्ठेयम् आ स्वामिदर्शनात् ।

**बन्धनागारे चेति** । कारागृहे च स्थितानां, बालादीनां चतुर्णां, जातनक्षत्रपौर्णमासीषु राज्ञो वार्षिकजन्मर्क्षोत्सवेषु पूर्णिमासु च, विसर्गः बन्धनगृहाद् मोक्षणं, कर्तव्यमिति शेषः । **पुण्येत्यादि** । पुण्यशीलाः धर्माचरणस्व-

दिवसे पञ्चरात्रे वा बन्धनस्थान् विशोधयेत् ।
कर्मणा कायदण्डेन हिरण्यानुग्रहेण वा ॥
अपूर्वदेशाधिगमे युवराजाभिषेचने ।
पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे षट्त्रिंशोऽध्यायः
नागरिकप्रणिधिः । आदितः सप्तपञ्चाशः ॥
एतावता कौटलीयस्यार्थशास्त्रस्याध्यक्षप्रचारो
द्वितीयमधिकरणं समाप्तम् ॥

---

भावाः कुतोऽपि यादृच्छिकाद् वृत्तव्यतिक्रमात् प्रसक्तकारागृहप्रवेशा इत्यार्थं, समयानुबद्धा दोषनिष्क्रयं दद्युः समयेन आयतिविशुद्धिप्रातिभाव्यसंविदा प्रतिबद्धाः कृतदोषानुरूपं हिरण्यदण्डं दद्युः, बन्धनगृहे प्रवेशाभावाय। तदिदं बन्धनगृहप्रवेशनपक्षप्रतिक्षेपकं पक्षान्तरं वाशब्दो द्योतयति ।

अध्यायान्ते श्लोकावाह—**दिवस** इति। दिवसे प्रतिदिवसं, पञ्चरात्रे वा प्रतिपञ्चरात्रं वा, बन्धनस्थान्, विशोधयेत् विशोधनं दण्डग्रहणेन दोषनिष्क्रयं कारयेत्। कथं, कर्मणा भारवहनशकटाकर्षणादिना दण्डदानासामर्थ्ये, कायदण्डेन शरीरताडनादिना कर्मकरणासौकर्ये, हिरण्यानुग्रहेण वा हिरण्यग्रहणरूपेणानुग्रहेण वा बन्धनस्थगुणित्वे । इह केचिद् 'विशोधयेदि'-त्यस्यावृत्त्या 'बन्धनगतान् विशोधयेत् सुस्था दुःस्था वेति परीक्षेते'त्यर्थान्तरमपि संगृह्णन्ति ॥

बद्धमोक्षनिमित्तान्याह —**अपूर्वे**त्यादि। अपूर्वदेशाधिगमे शत्रुजयनिमित्ते नूतनदेशलाभे । शेषं सुगमम् ॥

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
आध्यक्ष्याख्याधिकरणं द्वैतीयीकमपूर्यत ॥

इति श्रीपश्चिमसमुद्रमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाम्रहाराभिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां श्रीमूलाख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे षट्त्रिंशोऽध्यायः नागरिकप्रणिधिः ।
अध्यक्षप्रचारो द्वितीयमधिकरणं समाप्तम् ॥

---

प्रथमसम्पुटः समाप्तः ।

**शुभं भूयात् ।**

# शुद्धिपत्रम् ।

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १७ | २४ | च | वा |
| ५६ | २० | वन्तिभ | भवन्ति |
| ६६ | १८ | ण | णे |
| ,, | १५ | या | यो |
| ३१३ | २७ | त्र घे | त्र पष्ठौही भारवहनसम |
| ३३० | २५ | नी, ह | नी ह |
| ३५८ | ८ | मप्ताम् | माप्तम् |

TRIVANDRUM SANSKRIT SERIES

No. LXXX.

THE

# ARTHAŚĀSTRA

OF

# KAUṬALYA

with the commentary Śrīmūla of


MAHĀMAHOPĀDHYĀYA

T. GAṆAPATI ŚĀSTRĪ,

HONORARY MEMBER OF THE ROYAL ASIATIC SOCIETY OF GREAT BRITAIN AND IRELAND,

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*


EDITED BY THE COMMENTATOR.

**Part II—3, 4, 5, 6 & 7 Adhikaraṇas.**


PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.

1924

Inland Price Rs. 8.] [Foreign 16 s.



[*The copyright in the text and in the first edition of the Commentary in Sanskrit is reserved with the Government of Travancore. All other rights in the commentary are reserved with the author thereof.*]

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८०.

# कौटलीयम्

# अर्थशास्त्रं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

लण्डनपुरस्थराजकीयैष्याखण्डीयविद्यासेवकसमाजपूज्यसभ्यपदभाजा

महामहोपाध्यायेन

त. गणपतिशास्त्रिणा

विरचितया श्रीमूलाख्यया व्याख्यया

समुपेतं

तेनैव संशोधितम् ।

द्वितीयः सम्पुटः — तृतीयचतुर्थपञ्चमषष्ठसप्तमाधिकरणानि ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दाः १०९९, क्रैस्ताब्दाः १९२४.

# PREFACE.

This is the second part of the Arthaśāstra of Kauṭalya, in which are included the next five Adhikaraṇas only, in order that it may be equal in size to the first.

When this volume was about to be published, a copy of Dr. Jolly's edition of the Arthaśāstra published at Lahore, came to hand, the readings of which, as well as of the Mysore edition, as compared with those of the Trivandrum edition, will be given as an appendix to the third part.

Dr. Jolly's introduction deals with many questions connected with the work. We shall consider some of his arguments in support of his theories, as also of others referred to therein.

From the closing verse of the first chapter,

सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।
कौटल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥

and from the closing verse of the tenth chapter of the second Adhikarana,

सर्वशास्त्राण्यनुक्रम्य प्रयोगानुपलभ्य च ।
कौटल्येन नरेन्द्रार्थे शासनस्य विधिः स्मृतः ॥

and from the two stanzas at the end of the work,

येन शस्त्रं च शास्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥
दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च ॥

as well as from the fact that quotations cited under the name of Kauṭalya or Kauṭalīya are all found in the work, it is quite proper that it should be regarded as the production of Chāṇakya alias Vishṇugupta, a contemporary of Chandragupta Maurya. But Drs. Winternitz, Jolly and Keith, hold that the Arthaśāstra was not the production of a person named Kauṭalya, a contemporary of Chandragupta Maurya, on the following grounds:—

(i) no reference is made in the work to the great empire of Chandragupta, which is said to have been built up by Chāṇakya (Dr. Winternitz), nor is the name Pāṭaliputra, the capital of the empire, mentioned, (Dr. Jolly.);

(ii) the theories propounded refer rather to the governance of a number of small independent states than of a great empire like that of Chandragupta, (Dr. Winternitz);

(iii) no great person named Kauṭalya did exist during the time of Chandragupta Maurya, as he is not mentioned by Megasthenes, (Dr. Jolly);

(iv) the person referred to frequently, as Kauṭalya, is not the author, because, the opinion of Kauṭalya in the course of the discussion of ministerial usurpation, dealt with in the sixth chapter of the Yogavritta Adhikaraṇa is criticised by Bhāradvāja; and, it is impossible, if Kauṭalya was the author of the work, that his opinion would be criticised by a previous Āchārya, (Dr. Keith);

(v) the word Kauṭilya meaning as it does falsehood and hypocrisy could not possibly have been adopted as the name of the famous minister of Chandragupta (Drs. Keith and Winternitz).

Let us now consider these arguments.

With regard to the first, it may be said that the author could have referred to the empire of his own making, either (*a*) in the course of the work, as an illustration, or (*b*) at the beginning or end of the work, when he makes himself known. Of these two positions, the first is not possible; for, in a general treatise on the science of polity, it is but proper for an author to quote as authority the government of ancient kings well known to Itihāsas, instead of the one of his own making, lest he should be deemed as praising himself. As for the second, the author can be said to refer to the empire of Chandragupta, when he says at the end of the work in the sloka,

'येन शस्त्रं च शास्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥'

that that person is the author of the work, who pulled down the empire of the Nandas. From this it may be inferred that reference is also made to the place where he lived, viz. Pāṭaliputra. It will be noted here that the author never fails to make mention of towns and cities, whenever he finds necessity to do so, as when he speaks of Magadha, Mathura, etc., as the sources of silk, cotton and other goods. If Pāṭaliputra is not mentioned in the course of the work, it is because there is no context for it.

The second argument is not conclusive. The theories of government described are as much applicable to a great empire as to small and independent states. Besides, the author dwells especially on the mutual duties of emperor and subject kings in the fifteenth and sixteenth chapters of the seventh Adhikaraṇa.

The third argument cannot be accepted. How can the record of Megasthenes which is admittedly a mixture of real and imaginary statements, be an authority on a subject which itself is not mentioned therein? Granting that Megasthenes knew of Kauṭalya, it does not necessarily follow that he should have mentioned that name in his records. It is possible that Megasthenes came to India many years after the death of Kauṭalya when Chandragupta was in full liberty and when the events connected with the name of Kauṭalya began to fade away from the memory of the subjects. Again, he might have heard of Kauṭalya from mere hearsay and because he did not know much of him he might not have cared to say anything regarding him.

Thus the probabilities being more for not mentioning the name of Kauṭalya by Megasthenes, how can it be said that the mighty Kauṭalya who is known to fame for thousands of years and whose exploits are recorded in the Vishṇu, Vāyu and other authoritative Purāṇas did not exist during the time of Chandragupta? Dr. Jolly's argument so far as it based on the accounts of Magasthenes is tantamount to saying that, in solving problems concerning Indian antiquities, even the silence of Megasthenes is to be regarded as a piece of evidence. It further implies an utter disregard of such eminent authorities as the Vishṇu Purāṇa, Vāyu Purāna, Kāmandakīya Nītisāra etc.

The fourth argument is not correct. For Kauṭalya is not criticised here by Bhāradvāja as said by Dr. Keith. It is usual for writers either to state first the views of others and the reasons therefor and then to criticise and establish their own views, or to state their own views first, and then criticise the views of others. It is the latter method that is resorted to here by the author. The purport of the passages beginning from 'एवमेकैश्वर्यममात्यः कारयेदिति कौटल्यः' and ending with 'प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतदिति कौटल्यः' is this:" My opinion is that the minister shall make the prince assume the powers of sovereignty, while Bhāradvāja, an ancient Āchārya, thinks quite the contrary (that is, the minister shall take upon himself the powers of sovereignty) which is full

of evils as it excites the anger of the people and is unrighteous and uncertain of success" (Vide Sanskrit introduction for a fuller discussion).

The fifth argument is not convincing. The name Kauṭilya though a bad one might have been derived like the name Kautsa as stated by Prof. K. V. Rangasvami Iyengar in his additional notes on "Considerations on some aspects of Ancient Indian Polity". In fact, the word Kauṭilya (इकारमध्य) is a mistake handed down to us by scribes and readers. All the ancient manuscripts of the text and the commentaries of the Arthaśāstra, available here, read throughout as Kauṭalya (अकारमध्य), and not as Kauṭilya. Kuṭala is the name of a Rishi who founded the Kuṭala Gotra and any descendant of that Gotra may be called Kauṭalya. This is the reason why the author of Jayamangalā, a commentary on the Nītisāra of Kāmandaka observes that Kauṭalya is the name given to the author of the Arthaśāstra after his Gotra, Kuṭala. A few other details regarding the name are given in the introduction to the first volume

Thus are refuted the contentions that at the time of Chandragupta Maurya a great man named Kauṭalya never existed and that the extant Arthaśāstra could not have been written by a contemporary of Chandragupta. We have now arrived at the conclusion that the Arthasāstra was written by a contemporary of Chandragupta Maurya, which also makes definite the date claimed for it, viz., 4th century B. C.

We shall now turn to a few minor points which in the opinion of Dr. Jolly and others are regarded as inconsistent with the early date assigned to it;

1. The number of chemical substances mentioned in the Arthaśāstra being larger than that in Suśruta and other works of the kind points to a later stage of the development of the science of chemistry at the time of Kauṭalya than at the time of Suśruta and thus testifies to the posteriority of the Arthaśāstra (Winternitz). But this is an unwarranted inference. It is quite possible that at the time the science had attained an advanced stage, Suśruta dealt with only a small number of chemicals, because his was a purely medical work, admitting mention of such substances only as were relevant to the subject. But the Arthaśāstra is not limited in scope. It concerns itself with a variety of subjects such as the manufacture of gold and other precious metals, the preparation

of poison etc., and consequently it refers to a good number of chemical substances. But in the Dhātukautalīya* and similar other works on chemistry one might expect an exhaustive treatment of chemicals. What follows from this is, the extent of the mentioning of chemical substances wherever necessary in a work that deals primarily with other subjects cannot by itself be made the basis for fixing the age of that work.

2. The Arthaśāstra of Kauṭalya, says Dr. Jolly, has largely borrowed from the Yājnavalkyasmriti, and as the date of the latter is later than the 3rd century A. D., the Arthaśāstra should have come after it. This is not correct. For there is no evidence to show that the Yājnavalkyasmriti is later than the third century A. D. On the contrary, the date of Kautalya having been fixed as 4th century B. C. it naturally follows that Yājṇavalkya, from whom Kauṭalya has borrowed, should be anterior to the latter. What is logically true cannot be contradicted by an apparent argument. Besides, the word Yajṇavalka is mentioned in the Gargādigaṇa (गर्गादिगण) under the sūtra "गर्गादिभ्यो यञ्" of Pāṇini. It is clear from this that Pāṇini knew of a Yājnavalkya born of the Yajṇavalka Gotra. Probably the same Yājnavalkya was the author of the Smriti and therefore earlier than Pāṇini.

3. Dr. Keith is of opinion that the use of correct Trishtup stanzas in regular metre as found in the Arthaśāstra is not in favour of its early date and that the language of the work is not sufficiently archaic. It may be asked which is unsuitable to the antiquity—the use of mere Trishtup stanzas or the correctness and regularity of the four lines? Whatever it is, there is no sort of restriction in the case of a non-vedic work. Though to Dr. Keith, the language does not look archaic, to me it does look decidedly archaic, more archaic than the Mahābhāshya of Patanjali and similar other works. The matter may well be left to the judgment of Sahridayas.

4. Another scholar thinks that the Arthasāstra, covering as it does, several branches of human knowledge could not possibly be the production of a single author, but a composition by several authors. The following statement of Kāmandaka at the beginning of his Nītisāra,

वंशे विशालवंशानामृषीणामिव भूयसाम् ।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः ॥

* Vide introduction to the first part p. 10.

जातवेदा इवार्चिष्मान् वेदान् वेदविदां वरः ।
योऽधीतवान् सुचतुरश्चतुरोऽप्येकवेदवत् ॥
यस्याभिचारवज्रेण वज्रज्वलनतेजसः ।
पपातामूलतः श्रीमान् सुपर्वा नन्दपर्वतः ॥
एकाकी मन्त्रशक्त्या यः शक्त्या शक्तिधरोपमः ।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ॥
नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः ।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ॥

leaves no room for doubt on this matter. Here Kamandaka ascribes the work to Vishnugupta after likening him to God Brahman in respect of his being a seer and an author of various sciences. The date of Kāmandaka is said to be the 1st century B. C., and he can certainly be credited with more accurate and reliable knowledge about Kautalya than we of the present day. Whatever may be the date of Kāmandaka, it is certain that he was far anterior to the poet Bhavabhūti. It is legitimate to surmise from the Mālatīmādhava that Bhavabhūti was conversant with the Nītitsāra of Kāmandaka as he thought it fit to give the name Kāmandaka —the traditional sense of which is restricted to the author of Nītisāra—to a female ascetic in his Mālatīmādhava who is described as proficient in the art of diplomacy. Nor is "Kamandakī" an accidental and unmeaning name given by the poet without any reference to the characteristics of the author of the Nītisāra, as Dr. Jolly thinks, for, all the characters in the Mālatīmādhava are given significant and appropriate names. The names Mālatī and Mādhava which are excitants of Sringārarasa are quite suitable to the heroine and hero. Aghoraghanṭa and Kapālakuṇḍalā stand for the terrible worshippers of Chāmundī, while Buddharakshitā and Avalokitā represent the disciples of the Buddhist nun. Thus when all the names of the characters are significant, it is not reasonable to regard the name Kāmandaka alone as unmeaning and accidental like Dittha (डित्थ). Further no one need doubt whether a mastery in so many fields of knowledge could ever be met with in one individual, because, when it is quite possible that a person gifted with an intellect of a very high order may become सर्वज्ञकल्प, it is not at all a wonder if he attains mastery over a number of subjects such as Kautalya is credited with.

What we have said above disproves the observation of Dr. Jolly, that the "whole work is likely to have been

composed by a single person, probably a Pandit belonging to a school of polity and law, who to render a dry subject interesting, introduced debates in which the Pūrvapaksha is put in the mouth of eminent sages or of deities whose names he got from the Mahābhārata or from tradition, while the Uttarapaksha or Siddhānta is reserved for Kautalya", in as much as the evidences furnished by Kāmandaka and other eminent writers in support of the ascription of the authorship of the Arthasāstra to Kautalya are still extant. Dr. Jolly seems to think that there were really no works composed by the ancient Āchāryas Bhāradvāja, Parāsara, Visālāksha, Brihaspati, etc., which can be regarded as the sources of the several Pakshas ascribed to them in the Arthasāstra. But we have seen in the commentary on the Yājnavalkyasmriti by Visvarūpachārya, the illustrious predecessor of Vijnānesvara long extracts from the Arthasāstra of Brihaspati and Visalāksha (T. S. Series No. 74, pp. 184, 188 and 190), and it is clear therefore that the Arthasāstra of Brihaspati and Visālāksha must have existed during the time of Visvarupachārya. In like manner, it can be inferred that the works of Bhāradvāja and other Āchāryas, who are mentioned in the Arthasāstra along with Brihaspati and Visālāksha must have once existed but disappeared subsequently.

So far we have considered in detail the chief opinions of Dr. Jolly and others. One more statement of Dr. Jolly has to be examined. It is that for the Arthasāstra there was a surname 'Samāna Tantra' (समानतन्त्र) which was hitherto unknown. Medhātithi in his commentary on the 191st sloka in the seventh chapter of the Manusmriti quotes the verse 'द्रे शते धनुषाम्' which is found in the fifth chapter of the tenth Adhikarana of the Arthasāstra of Kautalya and introduces the quotation by saying 'समानतन्त्रेणोक्तम्'. Similarly on the 205th sloka in the same chapter, he quotes 'दैवं . . . . . . . . . . मानुषं कर्म लोकं पालयति' which is an adaptation of the sentence 'दैवमानुषं हि कर्म लोकं यापयति' found in the second chapter of the sixth Adhikaraṇa, and introduces this quotation by saying 'समानतन्त्रेऽपि'. From this Dr. Jolly concludes that the Arthasāstra was surnamed Samānatantra, and also says that since the phrases 'इति समानं पूर्वेण' 'इति समानम्' are found to occur in the first chapter of the fifth Adhikaraṇa and in many other places this name is quite appropriate to the work. But this is obviously wrong. Samāntantra is a Karmadhāraya compound word which should be split as समानं च तत् तन्त्रं च and

means another Sāstra on the same subject. What is conveyed in समानतन्त्रेणोक्तम् is that the topic under reference is also dealt with in another sastra on the same subject. That sastra is, in fact, the Arthasāstra of Kautalya. The word समानतन्त्र is found not only in the Bhāshya of Medhātithi, but also in the Nyāyasūtra of Gautama 'समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः'. It is an expression commonly used in commentaries on sastras when another sastra is cited as authority. On no ground can it be said that Arthasāstra is meant by that word. It may here be noted that in the sastraic works the transference of a statement from one place to another (अतिदेश) is indicated by various phrases such as 'समानं पूर्वेण' 'समानम्' 'पूर्ववत्' 'प्राग्वत्' 'एतेन व्याख्यातम्'. All these phrases are synonymous and the use of any of them is common to all works.

Trivandrum,
17th May 1924.

T. GAṆAPATI SĀSTRI.

# उपोद्घातः ।

---

अयं **कौटलीयार्थशास्त्रस्य** द्वितीयः सम्पुटः । अत्र **धर्मस्थीयं कण्टकशोधनं योगवृत्तं मण्डलयोनिः षाड्गुण्यमिति** पञ्चाधिकरणानि निवेशितानि । तद्गतानां प्रमेयानामनुक्रमणी चात्र योजिता । पूर्वस्मात् सम्पुटादेतस्य परिमाणाधिकत्वं परिहर्तुमुत्तराधिकरणमिह न योजितम् ।

यावत् सम्पुटोऽयं प्रकाशनाय सज्जीकृतः, तावत् **कौटलीयार्थशास्त्रस्यैकं** नूतनं संस्करणं जर्मनिदेशीयपण्डितजालिकृतमिति पाञ्चनदालवपुराद् बहिरवतीर्णं **दृष्टं**, यदीयान् पाठविशेषान् **मैसूरपुस्तकगतैरस्मदीयपुस्तकगतैश्च** पाठविशेषैः सहान्योन्यव्यतिरेकावगमार्थमस्मदीयतृतीयसम्पुटस्य परिशिष्टे प्रदर्शयिष्यामः । अस्य तु **लवपुरीयस्य** पुस्तकस्योपोद्घाते **जालिना कौटलीयमर्थशास्त्रमधिकृत्य** बहु प्रपञ्चितम् । तत्र **दृष्टान्** कांश्चित् प्रमाणविकलांस्तदीयान् परकीयांश्चाभिप्रायान् इह विचारयामः ।

> "सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।
> **कौटल्येन** कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥"

इति प्रथमाध्यायान्तिमश्लोकात्,

> "सर्वशास्त्राण्यनुक्रम्य प्रयोगानुपलभ्य च ।
> कौटल्येन नरेन्द्रार्थे शासनस्य विधिः स्मृतः ॥"

इति द्वितीयाधिकरणदशमान्तिमश्लोकात्,

> "येन शस्त्रं च शास्त्रं च **नन्दराजगता** च भूः ।
> अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥
>
> दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
> स्वयमेव **विष्णुगुप्तश्चकार** सूत्रं च भाष्यं च ॥"

इति **ग्रन्थशेषश्लोकाभ्यां, कौटलीयनाम्ना कौटल्यनाम्ना** च ग्रन्थान्तरेषु प्रमाणतयोपात्तानां वाक्यानां ग्रन्थेऽस्मिन्नुपलम्भाच्चास्य प्रणेता स एव **चन्द्रगुप्तोपजीवितो विष्णुगुप्तापरनामा** साक्षाच्चाणक्य इति हि न्याय्या लोकस्य प्रतीतिः ।

अत्राप्याश्चर्यं द्वित्रा विप्रतिपन्ना उपलभ्यन्ते । तेष्वेक **आस्त्रिया**-देशीयः पण्डितो **विण्टरनिट्स्**नामा, अन्यो **जर्मनि**देशीयो **जालि**नामा, अपरः **कीथ्**संज्ञ आङ्ग्लेयपण्डितः । ते ह्येककण्ठ्यादूहन्ते —

**चन्द्रगुप्त**कालिकः **कौटल्यो** नाम कश्चिद् अस्यार्थशास्त्रस्य कर्ता नासीदिति । ऊहहेतूंश्चोल्लिखन्ति —

१. **चन्द्रगुप्त**साम्राज्यं स्वाधिष्ठितं ग्रन्थे क्वापि न सूचितं, चन्द्रगुप्तस्य स्थानीयं **पाटलीपुत्रं** च न स्मृतमिति,

२. क्षुद्रक्षुद्रस्वतन्त्रराज्यतन्त्रणरीतेरुपदेशेऽपि साम्राज्यतन्त्रणरीतिस्तत्र नोपदिष्टेति,

३. चन्द्रगुप्तकाले **कौटल्य**नामा यथाप्रतीतमाहात्म्यशाली कश्चित् पुरुषविशेष एव तावन्न स्थितः **मेगास्तनीश**नाम्ना यवनेन **चन्द्रगुप्त**संस्ताविना लिखिते चरितनिबन्धे तन्नामाग्रहणादिति,

४. **कौटल्यः कौटल्य** इति ग्रन्थे योऽसकृन्नाम्ना निर्दिश्यते स ग्रन्थकाराद् भिन्न एव योगवृत्तषष्ठाध्याये 'एवमेकैश्वर्यममात्यः कारयेदिति कौटल्यः' इत्युपक्षिप्तस्य कौटल्यमतस्य 'नैवमिति भारद्वाजः' इति भारद्वाजेन प्रतिक्षेपणात्, कौटल्यस्य प्रकृतार्थशास्त्रकर्तृत्वे पूर्वाचार्येण भारद्वाजेन तन्मतप्रतिक्षेपणायोगादिति,

५. **कौटिल्य** इति नामधेयमेव तावत् गर्ह्यार्थत्वाद् ग्रन्थकर्ता स्वीयत्वेन नोपाददीतेति च ।

त एतेऽत्यन्तनिःसारा मे प्रतिभान्ति । तथाहि —

न तावत् प्रथमो हेतुः शक्यशङ्कः, **चन्द्रगुप्त**साम्राज्यं स्वाधिष्ठितं **कौटल्येन** किं ग्रन्थमध्येऽर्थवादप्रसङ्गात् स्मर्तव्यम् आहोस्विद् ग्रन्थस्यादावन्ते वा स्वात्मनिवेदनप्रसङ्गात् स्मर्तव्यम् ऊहको मन्यते । नाद्यः पक्षः, सर्वराजसाधारणराज्यतन्त्रोपदेशपरे शास्त्रेऽस्मिन्नितिहासप्रसिद्धान्येव राजवृत्तान्यार्थवादिकतयोदाहर्तुमुचितानि, न तु स्वाधिष्ठितस्य साम्राज्यस्य वृत्तम् । तद्धि वर्ण्यमानं प्रत्युत विकत्थनतामेव वर्णयितुः प्रत्याययेत् । द्वितीयपक्षे तु 'येन

शस्त्रं च शास्त्रं च' इति ग्रन्थान्तश्लोके नन्दराज्योन्मूलयितृत्वमात्मनो वदता ग्रन्थकृता स्वाधिष्ठितं चन्द्रगुप्तसाम्राज्यं सूचितमेव । एतेन पाटलीपुत्रास्मरण-मपि समाहितं, नन्दराज्योन्मूलनकर्तृत्वकथनेन स्वाधिष्ठितदेशनगरादेरप्युक्तप्रा-यत्वात् । ग्रन्थमध्ये तु प्रसङ्गाभावात् पाटलीपुत्रं न स्मृतम् । मगधमथुरादिकं हि पत्त्रोर्णाकार्पासादिद्रव्यविशेषोत्पत्तिस्थानत्वात् कोशप्रवेश्यरत्नपरीक्षाप्रकर-णादौ द्रव्यविशेषोत्पत्तिस्थानप्रस्तावे स्मृतम्; पाटलीपुत्रं तु तदभावात् क स्मर्तव्यम् ।

द्वितीयो हेतुः शशशृङ्गायितः, यतः शास्त्रेऽस्मिन्नुपदिष्टास्तन्त्रणरीतयः क्षुद्रराज्यमहाराज्यसाम्राज्यानां सर्वेषां साधारणा एव । विशेषेण च षाड्गु-ण्याधिकरणस्य पञ्चदशषोडशाध्याययोर्दण्डोपनमितानां राज्ञामुपनमयितरि वृत्तिम् उपनमयितुस्तेषु वृत्तिं च प्रपञ्चयता सम्राजां तदधश्वराणां राज्ञां च परस्परतन्त्रणमुपदिष्टमेव ।

न तृतीयो हेतुः साधुः । मेगास्तनीसलिखितो हि चरितनिबन्धो भूताभूतार्थसङ्कीर्णः परिलुप्तबहुंशश्च; स कथं स्वानुक्तेऽप्यर्थे निर्णायको भवि-तुमर्हेत् । किञ्च जानतापि कौटल्यं मेगास्तनीसेन स्वग्रन्थे तदस्मरणं न्याय्यं संभाव्यते । मेगास्तनीसो हि कौटल्यस्वर्गप्राप्तेः परतः बहुषु वर्षेष्वती-तेषु कौटल्यपरतन्त्रत्वव्यपगमनिकामाविष्कृतनिजप्रभावपरमोर्जिते चन्द्रगुप्तस्य शासने वर्तमाने चन्द्रगुप्तगुणातिशयपरितृप्ताभिस्तन्त्रेतृचाणक्यगुणेषु प्रकृतिभि-रनतिस्मर्यमाणेषु पश्चादेव नूनं भारतमागतः, चन्द्रगुप्तं च राजानमुपाश्रितः । तस्य चन्द्रगुप्तपरमैश्वर्यसाक्षात्कारविस्मितस्य वैदेशिकस्य पूर्ववृत्तजिज्ञासाविर-हितस्य किंवदन्तीवशात् सामान्यतः श्रुतमपि कौटल्यवृत्तमनिर्ज्ञातविशेषतया न श्रद्धाया विषयो बभूव; अतस्तत् स्वनिबन्धे स नूनं न लिलेख । अविदित-मेव वा सर्वात्मना मेगास्तनीसस्य चन्द्रगुप्तसंस्तवपरायणस्य कौटल्यवृत्तं सम्भाव्यते, पौरजानपदसंस्तवाल्पत्वात् । एवञ्जातीयेषु मेगास्तनीसनिबन्धे कौटल्यनामानाख्यानस्य निमित्तेषु सम्भावयितुं शक्येषु तत् कौटल्यस्य अ-नेकसहस्रवर्षजगद्गीयमानकीर्तेः विष्णुवायुपुराणाद्युपश्लोकितमाहात्म्यस्यासत्तां चन्द्रगुप्तकाले गमयतीति कः खलु वक्तुं व्यवस्येत् । तथा वदता नाम जा-लिनार्थादिदमेवोक्तं भवति — 'भरतखण्डपुरावृत्तविशेषनिर्णयविषये वस्तुत-स्त्वाज्ञानावज्ञानादिनिमित्तो मेगस्तनीसस्य मूकिमापि प्रमाणं, प्रमाणमेव न

केवलं किन्तु भारतीयैः प्रमाणतया परिगृहीतस्योपपन्नार्थप्रतिपादकस्य विष्णु-वायुपुराणादिपुरातनग्रन्थजातस्य प्रामाण्यमप्युपहन्ति' इति । अत्र वयमुच्चै-श्चित्रीयामहे ।

न चतुर्थो हेतुः सङ्गतः, भारद्वाजेन कौटल्यमतस्यात्राप्रतिक्षेपात् । ग्रन्थकारा नाम परमतंससाधकं प्रथममुपन्यस्य तत्खण्डनपूर्वं स्वमतं स्थापयन्ति, स्वमतं वा प्रथमं निर्दिश्य पश्चात् तद्विरुद्धं परमतमनूद्य दूषयन्ति । अनयोरुभयविषयोः समुदाचारयोर्द्वितीयः प्रकार इह ग्रन्थकारेणाश्रितः। 'एवमेकैश्वर्यममात्यः कारयेदिति कौटल्यः' इत्यादिना 'प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतदिति कौटल्यः' इत्यन्तेन ग्रन्थेनैतदेव हि प्रतिपाद्यते— "अमात्य एकैश्वर्यं कारयेदिति मम मतं, भारद्वाजस्य तु पूर्वाचार्यस्य मतं मन्मतविरुद्धमीदृग्रूपं, तच्च प्रकृतिद्वेषजनकत्वात् पापिष्ठत्वादनियतसिद्धिकत्वाच्च बहुदोषम् इति, अर्थाच्च मन्मतं प्रकृतितोषकत्वाद् धर्मिष्ठत्वाद् नियतसिद्धिकत्वाच्चादोषं बहुगुणम्" इति च ।

अत्र हीदमवधेयम् — इह खल्वनेकाचार्यनामग्राहप्रवर्तितेष्वर्थविमर्शेषु सर्वत्र अनुपपन्नाचार्यमतखण्डनपूर्वमन्ते किमपि मतमुपपन्नं कौटल्यसम्बन्धितया नियमेन स्थाप्यते । कौटल्यश्च वस्तुतो ग्रन्थकार इति कृत्वा 'इति कौटल्यः' इत्युक्तीनां सर्वासाम् 'एवमहं मन्ये' इत्येवार्थः प्रतिपत्तव्यः । 'इत्यहमि'त्यहम्पदेनात्मनि परामर्शनीये कौटल्यपदेन परामर्शः स्वाहङ्कारपरिहारार्थ आचार्यसमुदाचारसिद्धो महाभाष्याकारादीनां महाभाष्यादौ 'गोनर्दीयस्त्वाह' इति गोनर्दीयादिपदेन परामर्शवत् । तथा च 'प्रकृते एवमेकैश्वर्यममात्यः कारयेदिति कौटल्यः' इत्यस्यायं फलितोऽर्थः—'राजव्यसनवशात् स्वायत्तीकर्तव्यतया प्राप्तमपि अखण्डं राज्यममात्यः स्वयमनपहरन् बालं राजकुमारमेवैकैश्वर्येण योजयेदित्यहं मन्ये' इति । 'एवममात्यः कारयेदित्यहं मन्ये' इत्युक्त्या सूचितम् 'एवममात्यो न कारयेदित्यन्यो मन्यते' इत्यमुमर्थम् अन्यनामग्रहणपूर्वं स्पष्टयति — 'नैवमिति भारद्वाजः' इति । केन प्रकारेण तर्ह्यमात्यः कारयेदिति भारद्वाजो मन्यत इत्याकाङ्क्षायामाह — 'प्रम्रियमाणे' इत्यादिना 'कालः कर्म चिकीर्षतः' इत्यन्तेन । एतावता भारद्वाजमतस्य स्वरूपं तत्साधकं च भारद्वाजोक्तं दर्शितं, न तु कौटल्यमतं भारद्वाजेन खण्डितं दर्शितं, साधकयुक्त्युपस्कृतस्य कौटल्यमतस्य कौटल्यप्राचीनेन भारद्वाजेनापरिज्ञाततया खण्डनायोगादिति बोद्धव्यम् । यदिदं भारद्वाजमतं ससा-

धकमुपदर्शितं, तद् भारद्वाजार्वाचीनः कौटल्यः खण्डयति — 'प्रकृतिकोपकमि'त्यादिना। अमात्येन क्रियमाणं स्वयं राज्यहरणं प्रकृतिद्वेषजनकं पापिष्ठम् अनिश्चितसिद्धिकं चेत्यतः कारणाद् भारद्वाजमतं हेयमिति कौटल्योऽभिप्रैतीत्यर्थः। एतेन कुमारराज्याभिषेचनस्य स्वाभिमतस्य प्रकृतिरञ्जकत्वधर्मिष्ठत्वैकान्तिकत्वरूपगुणयोग उपादेयत्वप्रयोजक उक्तप्रायः। एवञ्चात्र भारद्वाजस्य सम्प्रतिपन्नपूर्वाचार्यभावस्य कौटल्यमतखण्डयितृताया लेशतोऽप्यप्रतीतेः प्रत्युत कौटल्यस्यैव भारद्वाजखण्डयितृतायाः संप्रत्ययाच्च कौटल्यस्य प्रकृतग्रन्थकर्तृत्वविघटकं न किञ्चिदस्तीति स्पष्टमेव।

न पञ्चमोऽपि हेतुः समञ्जसः। यतः वक्रिमार्थतया कुत्सितापि कौटिल्यसंज्ञा कौत्सादिसंज्ञावदुपपद्यत इति प्रवक्तृरङ्गस्वाम्यार्येण समाधानमुक्तमेव। वस्तुतस्तु कौटिल्य इतीकारमध्योऽपपाठ एव पठितृलेखकप्रमादकृतः, सर्वेषु प्राचीनमूलादर्शग्रन्थेषु तद्विवरणादिषु च कौटल्य इत्यकारमध्यस्यैवैकरूप्येण पाठात्। कुटलो नाम गोत्रप्रवर्तक ऋषिविशेषः। तस्य गोत्रापत्यं कौटल्य इति। अत एव कामन्दकनीतिसारव्याख्यायां जयमङ्गलायां 'कौटल्य इति गोत्रनिबन्धना विष्णुगुप्तस्य संज्ञा' इत्युक्तम्। अधिकम् अर्थशास्त्रप्रथमसम्पुटोपोद्घाते द्रष्टव्यम्।

तदित्थं 'मौर्यचन्द्रगुप्तकाले कौटल्यनामा कश्चिद् महापुरुषो नासीदि'ति वादः, 'चन्द्रगुप्तसहचरेण नेदमर्थशास्त्रं प्रणीतं भवितुमर्हती'ति वादश्च दूरतो निरस्तः। चन्द्रगुप्तसहजीविप्रणीतत्वनिर्णयेन चार्थशास्त्रस्य कालोऽपि निर्धारितः क्रैस्तप्राचीनचतुर्थशताब्दीलक्षणः।

यत्तु ग्रन्थस्य तावत्प्राचीनतायां बाधकमिव किमपि किमपि जालिप्रभृतिभिरुपन्यस्तं, तदिदानीमालोचनीयम्। तत्र —

(१) सुश्रुताद्यपेक्षया धातुरसवादप्रकाराणामर्थशास्त्रेऽधिकतया कथनदर्शनेनास्य धातुरसवादविद्याप्रकर्षकालप्रभवत्वप्रतीत्या धातुरसवादविद्याशिशुभावावस्थाविर्भूतसुश्रुताद्युत्तरकालोत्पन्नतावगम्यत इति सुश्रुतात् क्रैस्तप्राचीनप्रथमशताब्दीभवादर्वाचीनमर्थशास्त्रमिति विण्टरनिट्स्। इदमयुक्तं — कामं सुश्रुताद्यपेक्षया धातुरसवादानामधिकाः प्रकाराः अर्थशास्त्रे प्रतिपाद्यन्ताम्। किन्तु तावता धातुरसवादशास्त्रस्य सुश्रुतादिकाले बालभावः अर्थशास्त्रकाले तरुणिमेति विभागो न कल्पयितुं शक्यः। तरुणिमदशायामेव सत्यां सुश्रुतादौ

धातुरसवादप्रकाराणामल्पानाम्, अर्थशास्त्रे बहूनां च कथनौचित्यसम्भवात्। सुश्रुतादितन्त्रं हि नाम चिकित्साशास्त्रम्। तत्र भेषजसाधनोपयोगितया यावद् धातुरसवादप्रमेयमपेक्षितं तावदेवाभिधानीयमित्यल्पमभिहितं स्यात्। अर्थशास्त्रे तु राज्यतन्त्रप्रधाने सुवर्णरजतादिसाधनाय शत्रुनिग्रहार्थौषधविशेषसाधनाय च यावदपेक्षितं तावदभिधानीयमिति पूर्वतः किञ्चिदधिकमभिहितं स्यात्। धातुरसवादप्रधाने तु शास्त्रे **धातुकौटलीया**दौ तत्सम्बद्धं प्रमेयजातं सर्वमभिधानीयमिति तत् कार्त्स्न्येनाभिहितं स्यात्। तस्माद् धातुरसवादानां प्रमेयान्तरप्रधानेषु तन्त्रेषु मनागमनाग् वा यथापेक्षमानुषङ्गिकतयाभिधानमभिधातृकालानुमानादावाकिञ्चित्करम्।

(२) याज्ञवल्कीयं धर्मशास्त्रमुपजीव्यतेऽर्थशास्त्रेण। तत्तु धर्मशास्त्रं क्रैस्ताब्दीयतृतीयशतकोत्तरकालभवमिति तदर्वाचीनतैव प्रकृतस्यार्थशास्त्रस्येति जालिः। इदं चायुक्तम्। तस्य धर्मशास्त्रस्य क्रैस्ताब्दीयतृतीयशतकोत्तरकालिकत्वे प्रमाणाभावात्। प्रत्युत कौटलीयार्थशास्त्रस्य प्रपञ्चितचरयुक्तिभिः क्रैस्तप्राचीनचतुर्थशताब्दीभवताया निर्णीततया तदुपजीव्यायाः स्मृतेस्तत्पूर्वकालिकत्वस्यैव न्यायतः प्राप्तत्वात्, न्यायप्राप्तस्य च प्रमाणाभासैर्बाधितुमशक्यत्वात्। किञ्च 'गर्गादिभ्यो यञ्' इति सूत्रे गर्गादिगणे यज्ञवल्कशब्दस्य पाठदर्शनेन पाणिनिर्यज्ञवल्कगोत्रापत्यं याज्ञवल्क्यं विदितवानिति प्रतीत्या तद्विदितस्यैव याज्ञवल्क्यस्य धर्मशास्त्रकारतायाः सम्भावितत्वेन पाणिनितोऽपि धर्मशास्त्रस्य प्रचीनत्वसम्भवाच्च।

(३) यदपि तृष्टुप्छन्दसि वाक्यशैल्यां चार्थशास्त्रस्य प्राचीनत्वं न भासत इति कीत्संज्ञो महाशय आह, तदपि न साधु। किं तृष्टुप्छन्दसः परिग्रह एव प्राचीनत्वाननुगुणः आहोस्वित् तत्र पादचतुष्टयेऽपि तुल्यलक्षणयोगः? । वेदादन्यत्रच्छन्दोविशेषपरिग्रहे प्राचीनार्वाचीनयोः कामचारान्नाद्यः पक्षः। पादचतुष्टये तुल्यलक्षणयोगायोगावपि प्रयोक्तुरैच्छिकावव्यवस्थितावव्यवस्थापकौ च। वाक्यशैल्यां प्राचीनत्वं तु कीत्महाशयं प्रति न भासते, मां प्रति तु महाभाष्याद्यतिशायि प्राचीनत्वं स्फुटं भासते। तत्र निर्णयः सहृदयेष्वायत्तः।

यत् पुनः प्रकृतार्थशास्त्रप्रतिपाद्यमानयावत्प्रमेयोपद्रष्टृत्वमेकस्य कर्तुर्न सम्भवतीति मन्यमानः कश्चिदाह — इदमर्थशास्त्रं बहुभिः सम्भूय प्रकरणशः प्रणीतं पश्चादेकीकृतमिति, तदपि नोपादेयं,

"वंशे विशालवंशानामृषीणामिव भूयसाम् ।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः ॥
जातवेदा इवार्चिष्मान् वेदान् वेदविदां वरः ।
योऽधीतवान् सुचतुरश्चतुरोऽप्येकवेदवत् ॥
यस्याभिचारवज्रेण वज्रज्वलनतेजसः ।
पपातामूलतः श्रीमान् सुपर्वा नन्दपर्वतः ॥
एकाकी मन्त्रशक्त्या यः शक्त्या शक्तिधरोपमः ।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ॥
नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः ।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ॥"

इति **कामन्दकेन विष्णुगुप्तस्य** बहुप्रमेयद्रष्टृतया बहुशास्त्रप्रणेतृतया च वेधस्तुल्यत्वाख्यानपूर्वं प्रकृतमहाशास्त्रकर्तृतायाः संकीर्तनात् । **कामन्दको** हि क्रैस्तप्राचीनप्रथमशताब्दीस्थितत्वाद् **विष्णुगुप्तासन्नकालो विष्णुगुप्तचरितानां** याथात्म्येऽस्मदाद्यपेक्षयाभिज्ञतमः । तस्य क्रैस्तप्राचीनप्रथमशताब्दीभवत्वविवादे वा क्रैस्ताब्दीयसप्तमशतकस्थित**भवभूत्य**पेक्षया प्राचीनत्वे विवादस्य नावकाशः, यतो **नीतिसार**कर्तरि निरूढेन **कामन्दक**शब्देन नीतिप्रयोगनिपुणां काञ्चित् परिव्राजिकां **मालतीमाधवे** व्यपदिशन् **भवभूति**र्नीतिशास्त्रनिष्णातत्वसाम्यकृतं तस्यां तत्पदव्यपदेशौचित्यं पश्यतीति युक्तिमती कल्पना । न च तस्यां कामन्दकशब्दो निरर्थक एव यदृच्छया निवेशितः कविना न तु प्रसिद्धकामन्दकधर्मारोपेणेति **जाल्युक्तं** युक्तम्, **मालतीमाधवे** पात्रेष्वनर्थकसंज्ञानिवेशनस्यादर्शनात् । **माधवमालत्यादयो** हि शब्दाः शृङ्गारोद्दीपकवचनाः शृङ्गारिनायकनायिकादिष्वानुगुण्यमभिसमीक्ष्य संकेतिताः, **अघोरघण्ट-कपालकुण्डलादयश्चामुण्ड्युपासकानुगुण्यं बुद्धरक्षितादयश्च बौद्ध**भिक्षुकीशिष्यतानुगुण्यम् । एवं सर्वासु संज्ञासु अर्थवतीषु कामन्दकीशब्दः परं **डित्थादि**नामवन्निर्निमित्तं भिक्षुक्यां संकेतित इत्युक्तिः कथं नाम सङ्गता स्यात् । इत्यादिकं विचारणीयं विद्वद्भिः । किञ्च बहुप्रमेयद्रष्टा **कौटल्य** एको इष्ट इति नासूया कर्तव्या । नहि पुरुषविशेषे कस्मिंश्चिल्लोकोत्तरप्रज्ञादिगुणयोगिनि सर्वज्ञकल्पत्वमपि वा द्रष्टुमशक्यं, किमुतैवञ्जातीयं बहुज्ञत्वम् ।

एतेन, जाली यदवोचत् — केनापि पण्डितेन महाभारतादिग्रन्थप्रसिद्धमहर्ष्यादिनामधेयैः कांश्चित् पूर्वाचार्यान् कल्पयित्वा तदीयत्वेन पूर्वपक्षाणां कौटल्यसम्बन्धित्वेन सिद्धान्तपक्षाणां च कल्पनभङ्ग्यार्थशास्त्रमिदं रचितमिति, तदपि परास्तं, कौटल्यकर्तृत्वस्थापकानां पूर्वोक्तकामन्दकादिवाक्यानां प्रामाण्यस्यानपन्हवनीयत्वात् । किञ्च, तथा वदतो जालेः कौटलीयार्थशास्त्रोद्भावितानां तत्तत्पक्षाणामाकरग्रन्थाः भारद्वाजादिभिः परमार्थतो न प्रणीता इति खल्वभिप्रायो गम्यते । सोऽत्यन्तायुक्तः, यतो याज्ञवल्क्यस्मृतिव्याख्यायां विज्ञानेश्वरोपजीव्यैर्विश्वरूपाचार्यैः प्रणीतायां बहूनां बृहस्पत्यर्थशास्त्रवाक्यानां विशालाक्षार्थशास्त्रवाक्यानां च प्रमाणतयोदाहरणदर्शनेन बृहस्पतिविशालाक्षार्थशास्त्रग्रन्थयोर्विश्वरूपाचार्यकाले सत्तावधारणात् तुल्यन्यायेन तत्सहपठितभारद्वाजाद्याचार्यग्रन्थानामपि स्थितलुप्तत्वानुमानात् ।

इत्थमुच्चावचोहैकजीवितेषु जालिमहाशयाद्यभिप्रायेषु प्रधानभूताः कौटलीयसम्बद्धा अभिप्राया विचारिताः; असम्यक्त्वं च तेषां विस्तरेण निरूपितम् । न चेहेतोऽधिकमवश्यविचारणीयं पश्यामः । अत इममेकमनन्योट्टङ्कितं जालिमहाशयस्यार्थविशेषाभ्यूहं लेशतो विचार्य प्रकृतमुपसंहरामः । स हि आह — 'अस्ति समानतन्त्रमिति कौटलीयार्थशास्त्रस्य पर्यायवाचकं पदमद्ययावदविज्ञातमि'ति । स किल तं तत्पर्यायपदविशेषं मेधातिथीयाद् मनुस्मृतिभाष्यादूहितवान् । मनुस्मृतिसप्तमाध्यायगतस्य १९१तमश्लोकस्य भाष्ये हि 'समानतन्त्रेणोक्तम्' इति प्रतिज्ञाय 'द्वे शते धनुषाम्' इति कौटलीयार्थशास्त्र (१०अधि. ५. अध्या) श्लोकः प्रदर्शितः । २०५ तमश्लोकभाष्ये च 'समानतन्त्रेऽपि' इत्युक्त्वा 'दैवं.... .... ....मानुषं कर्म लोकं पालयति' इति वाक्यं कौटलीयार्थशास्त्रषष्ठाधिकरणद्वितीयाध्यायस्थस्य 'दैवमानुषं हि कर्म लोकं यापयति' इति वाक्यस्य कथञ्चिदर्थानुवादकमुदाहृतम् । तेन लिङ्गेन कौटलीयमर्थशास्त्रं समानतन्त्रापरपर्यायमित्यूह्यत इति । अपि च स आह — युक्तश्च तस्मिन् समानतन्त्रशब्दव्यपदेशः 'इति समानं पूर्वेण' 'इति समानम्' इति च पञ्चमाधिकरणप्रथमाध्यायादिषु असकृदुक्तेस्तत्र दर्शनादिति । तदेतदखिलमत्यन्तमनुपपन्नम् । समानतन्त्रशब्दो ह्ययं यौगिकः कर्मधारयसमासनिष्पन्नः — समानं च तत् तन्त्रं चेति । समानतन्त्रं प्रमेयतस्तुल्यं शास्त्रान्तरं, 'समानतन्त्रेणोक्तम्' इत्यस्य प्रकृतं प्रमेयं तत्प्रतिपादकेन शास्त्रा-

न्तरेण वर्णितमित्यर्थः । तच्च शास्त्रान्तरं प्रकृते **कौटलीयं** भवति, तदीय-तयोदाहृताया वाक्यानुपूर्व्याः कौटलीये समुपलम्भात् । न चायं समानतन्त्र-शब्दप्रयोगो **मेधातिथि**भाष्य एवापूर्वो दृष्टः, 'समानतन्त्रसिद्धः परतन्त्रा-सिद्धः प्रतितन्त्रसिद्धान्त' इति न्यायदर्शनसूत्रेऽपि तद्दर्शनात् । एवं शास्त्रव्या-ख्यानादिग्रन्थेष्वपि शास्त्रान्तरप्रमाणीकरणावसरे समानतन्त्रशब्दप्रयोगो बहुलो दृष्टः । न हि तत्र समानतन्त्रपदं कौटलीयबोधकम् । एतेन **कौटलीय**स्य समानतन्त्रव्यपदेशौचित्यसमर्थनं जालिकृतं प्रत्युक्तम् । किञ्च, शास्त्रग्रन्थेषु क्वचिदुक्तस्यान्यत्रातिदेशो बहुभिः प्रकारैः क्रियते- क्वचित् 'समानं पूर्वेणे'ति, क्वचित् 'समानम्' इति, क्वचित् 'पूर्ववदि'ति, क्वचित् 'प्राग्वदि'ति, क्वचिद् 'एतेन व्याख्यातमि'त्येवमादिभिः। सर्वे चैते प्रकाराः समानार्थाः; तत्रान्य-तमस्यासकृदाश्रयणमप्यविशिष्टमेव सर्वग्रन्थेषु ॥

संग्रहश्लोकाश्चात्रैते —

आदिमध्यान्तिमाध्यायश्लोकप्रामाण्ययोगतः ।
**कौटल्य**नाम्ना वाक्यानां स्मृतानामाकरत्वतः ॥
वाक्यशैलीसमुन्नेयपुराणत्वानुगुण्यतः ।
**कामन्दको**पजीव्यत्वात् तद्गीतमहिमत्वतः ॥
यश्**चन्द्रगुप्त**सचिवो **विष्णुगुप्ता**दिविश्रुतः ।
सोऽस्य कर्तार्थशास्त्रस्य **कौटल्य** इति निर्णयः ॥

**अनन्तशयनम्** । **त. गणपतिशास्त्री.**
१७-५-१९२४

# द्वितीयसम्पुटस्य विषयानुक्रमणी ।

## धर्मस्थीयं तृतीयमधिकरणम् ।

## कण्टकशोधनं चतुर्थमधिकरणम्



## योगवृत्तं पञ्चममधिकरणम्।



## मण्डलयोनिः षष्ठमधिकरणम्।

॥ श्रीः ॥

श्रीगणेशाय नमः ।

# कौटलीयम्

# अर्थशास्त्रं

महामहोपाध्यायगणपतिशास्त्रिविरचितव्याख्योपेतम् ।

(द्वितीयः सम्पुटः ।)

---

## धर्मस्थीयं—तृतीयमधिकरणम् ।

### ५७, ५८. प्रक. व्यवहारस्थापना, विवादपदनिबन्धः ।

**धर्मस्थास्त्रयस्त्रयोऽमात्या जनपदसन्धिसङ्ग्रहणद्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः ।**

---

अथ धर्मस्थीयं नाम तृतीयमधिकरणम् । धर्मेषु वर्णाश्रमजातिसम्बन्धिषु तिष्ठन्ति तान् विदन्ति अनुवर्तन्ते चेति धर्मस्थाः तानाधिकृत्य प्रवृत्तं धर्मस्थीयम् । 'धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेदि'ति प्रथमाधिकरणस्य दशमाध्याये, 'द्वितीये भागे पौरजानपदानां कार्याणि पश्येद्' इति एकोनविंशाध्याये चोक्तम् । के कति वा कार्यद्रष्टारः कुत्र स्थित्वा कार्यं पश्येयुरित्यादिकं वक्तुमिदमधिकरणमारभ्यते ।

तत्र **व्यवहारस्थापना** इति प्रथमं सूत्रम् । **विवादपदनिबन्धः** इति द्वितीयम् । तदुभयमेकस्मिन्नध्याये प्रतिपाद्यते । व्यवहारा नाम विवाहसंयुक्तं दायभागः इत्यादयो द्वादश वक्ष्यमाणाः, तेषां स्थापना ग्राह्याग्राह्यत्वनिरूपणमिति पूर्वसूत्रस्यार्थः । विवादपदानां पूर्ववाद्युत्तरवादिवचनानां निबन्धः व्युष्टदेशजात्यादिक्रमेण पत्रलेखनमित्युत्तरसूत्रस्य ।

प्रथमसूत्रं व्याचष्टे—**धर्मस्था** इत्यादि । धर्मस्थास्त्रयस्त्रयः, अमात्याः सहावस्थिताः, जनपदसन्ध्यादिषु जनपदसन्धावन्तपालदुर्गे संग्रहणे दशग्रामीप्रधानाधिष्ठाने चतुश्शतग्रामीप्रधाने द्रोणमुखेऽष्टशतग्रामीप्रधानाधिष्ठाने स्थानीये चेत्येतेषु, **व्यावहारिकान्**, अर्थान् कार्याणि, कुर्युः ।

G. P. T. 3559. 1000. 22-11-98. B

**तिरोहितान्तरगारनक्तारण्योपध्युपह्वरकृतांश्च व्यवहारान् प्रतिषेधयेयुः। कर्तुः कारयितुश्च पूर्वः साहसदण्डः। श्रोतृणामेकैकं प्रत्यर्धदण्डाः। श्रद्धेयानां तु द्रव्यव्यपनयः।**

**परोक्षेणाधिकर्णग्रहणमवक्तव्यकरा वा तिरोहिताः सिध्येयुः।**

**दायनिक्षेपोपनिधिविवाहसंयुक्ताः स्त्रीणामनिष्कासिनीनां व्याधितानां चामूढसंज्ञानामन्तरगारकृताः सिध्येयुः।**

---

अग्राह्यव्यवहारानाह— **तिरोहितेत्यादि**। तिरोहितादीन् षड् व्यवहारान् आरप्स्यमानान् आरब्धांश्च, प्रतिषेधयेयुः। तत्र तिरोहितः प्रच्छन्नदत्तविषयः प्रच्छन्नात्तविषयश्च। स च स्वामिदेशकालक्रियाद्रव्यादिभेदेन बहुविधः। तत्र स्वामितिरोहितः स्वाम्यनुज्ञां विनैवान्येन तद्धनं यद् विनियुज्यते, देशतिरोहितः परोक्षिसाक्षिकः, कालतिरोहितः शतवर्षोपेक्षितऋणादिविषयः, क्रियातिरोहितः देशान्तरस्थे प्रमाणलेख्ये ऋणार्थनाविषयः, द्रव्यतिरोहितः द्विपाच्चतुष्पात्स्थावरेषु दृष्टचगोचरेषु तद्विक्रयः। अन्तरगारकृतः गर्भागारकृतः, नक्तकृतः रात्रिकृतः, अरण्यकृतः, उपधिकृतः छद्मकृतः, उपह्वरकृतः रहस्यकृतो दातृप्रतिग्रहीतृमात्रविदितः। कर्तुः प्रतिषिद्धव्यवहारप्रयोक्तुः, कारयितुस्तत्प्रयोजकस्य च, पूर्वः साहसदण्डः। श्रोतृणां धर्मस्थानाम्, एकैकं प्रति प्रत्येकम्, अर्धदण्डाः पूर्वसाहसस्यार्धानि। श्रद्धेयानां तु निष्कपटानां तु प्रतिषिद्धव्यवहारस्पर्शिनां, द्रव्यव्यपनयः साध्यद्रव्यहानिः, न तु दण्ड इत्यर्थः।

प्रतिषिद्धापवादमाह—**परोक्षेणेति**। परोक्षेण आधिकर्णग्रहणम् अप्रत्यक्षं गृहारामादिकमाधिं कृत्वा ऋणग्रहणं, सिध्येत् तिरोहितमपि। अवक्तव्यकरा वा अमुकधनममुकेन व्यवह्रियमाणं न दुष्यतीति लोकसम्प्रतिपन्ना व्यवहारा वा, तिरोहिताः स्वामितिरोहिता अपि, सिध्येयुः।

अन्तरगारकृतानुपादेयानाह—**दायेत्यादि**। दायो दायविभागस्तत्सम्बद्धः, निक्षेपः आभरणाद्यर्थं स्वर्णाद्यर्पणम् अथवा अन्तस्स्थद्रव्यरूपसंख्याप्रदर्शनपूर्वं वासनस्यार्पणं तत्सम्बद्धः, उपनिधिः अनाख्यातवस्तुगर्भसमुद्रवासनोपनिधानसम्बद्धः, विवाहसंयुक्तः स्त्रीधनविषयः इत्येतेऽन्तरगारकृताः, स्त्रीणाम्, अनिष्कासिनीनां गृहबहिरनिर्गत्वरीणां, व्याधितानां चामूढसंज्ञानां रोगिणां चानष्टचेतनानाम्, अन्तरगारकृताः सिध्येयुः।

**साहसानुप्रवेशकलहविवाहराजनियोगयुक्ताः पूर्वरात्रव्यवहारिणां च रात्रिकृताः सिध्येयुः ।**

**सार्थव्रजाश्रमव्याधचारणमध्येष्वरण्यचराणामरण्यकृताः सिध्येयुः ।**

**गूढाजीविषु चोपधिकृताः सिध्येयुः ।**

**मिथस्समवाये चोपह्वरकृताः सिध्येयुः ।**

**अतोऽन्यथा न सिध्येयुः । अपाश्रयवद्भिश्च कृताः, पितृमता पुत्रेण, पित्रा पुत्रवता, निष्कुलेन भ्रात्रा, कनिष्ठेनाविभक्तांशेन, पतिमत्या पुत्रवत्या च स्त्रिया, दासाहितकाभ्याम्, अप्राप्तातीतव्यवहाराभ्याम्,**

---

रात्रिकृतव्यवहारेष्वदुष्टानाह— **साहसेत्यादि** । साहसयुक्तः परधनप्रसभलुण्टनसम्बद्धः अनुप्रवेशयुक्तः परधनस्वगृहानुप्रवेशनविषयः कलहयुक्तः वाक्पारुष्यादिसम्बद्धः विवाहयुक्तः प्रसिद्धः राजनियोगयुक्तः राजनियोगो राजाज्ञाप्रयुक्तो नगररक्षाधिकृतव्यापारः तद्युक्तस्तत्सम्बद्धः इति पञ्चैते व्यवहाराः, पूर्वरात्रव्यवहारिणां च वेश्याशौण्डिकादीनां च व्यवहाराः, रात्रिकृताः सिध्येयुः ।

अरण्यकृतव्यवहारेष्वदुष्टानाह — **सार्थेत्यादि** । सार्थो वणिक्सङ्घः व्रजा गोष्ठवृत्तयो गोपालाः आश्रमो वनकुटुम्बिनः व्याधाः किराताः चारणाः लङ्घनप्लवनादिजीविनः इत्येषां मध्येषु, अरण्यचराणां वनचराणां, व्यवहाराः, अरण्यकृताः सिध्येयुः ।

उपधिकृतव्यवहारानुपादेयानाह— **गूढाजीविषु चेति** । कूटहिरण्यादिव्यवहारिषु च, उपधिकृताः छलकृता व्यवहाराः सिध्येयुः ।

उपह्वरकृतव्यवहारान् उपादेयानाह — **मिथःसमवाये चेति** । रहःसंप्रयोगे स्त्रीपुंसयोर्गान्धर्वविवाहनिमित्ते, उपह्वरकृताः सिध्येयुः ।

**अतोऽन्यथा न सिध्येयुरिति** । उक्तातिरिक्तप्रकारास्तिरोहितादयो नोपादेयाः । **अपाश्रयवद्भिश्चेति** । अपाश्रयवन्तः परतन्त्राः तैश्च, कृताः व्यवहाराः, न सिध्येयुः । परतन्त्रान् प्रपञ्चयति — पितृमता पुत्रेण पितरि व्यवहारनिपुणे विद्यमाने पुत्रेण कृताः, पित्रा पुत्रवता पुत्रे कुटुम्बभरणक्षमे विद्यमाने पित्रा निवृत्तव्यवहारेण कृताः, निष्कुलेन भ्रात्रा कुलनिष्पतितेन भ्रात्रा कृताः, कनिष्ठेनाविभक्तांशेन कनिष्ठेन दायभागात् प्राक् कृताः, पतिमत्या पुत्रवत्या च स्त्रिया भर्तरि पुत्रे च कुटुम्बभरणक्षमे विद्यमाने स्त्रिया कृताः, दासाहितकाभ्यां दासेन स्वाम्यधीनेन आहितकेन आधीकृतेन चाधि-

**अभिशस्तप्रव्रजितव्यङ्गव्यसनिभिश्चान्यत्र निसृष्टव्यवहारेभ्यः ।**

**तत्रापि क्रुद्धेनार्तेन मत्तेनोन्मत्तेनावगृहीतेन वा कृता व्यवहारा न सिध्येयुः । कर्तृकारयितृश्रोतॄणां पृथग् यथोक्ता दण्डाः ।**

**स्वे स्वे तु वर्गे देशे काले च स्वकरणकृताः सम्पूर्णचाराः शुद्धदेशा दृष्टरूपलक्षणप्रमाणगुणाः सर्वव्यवहाराः सिध्येयुः ।**

---

ग्राहकाधीनेन कृताः, अप्राप्तातीतव्यवहाराभ्याम् अप्राप्तव्यवहारेण ऊनषोडशवयस्केन अतीतव्यवहारेण अतिक्रान्तसप्ततिवयस्केन च कृताः, अभिशस्तादिभिश्चतुर्भिश्च अभिशस्तैर्महापातकदूषितैः प्रव्रजितैः संन्यासिभिः व्यङ्गैः मूकबधिरादिभिः व्यसनिभिः स्त्रीद्यूतपानासक्तैश्च कृताः । तत्रापवादमाह — **अन्यत्र निसृष्टव्यवहारेभ्य** इति । निसृष्टव्यवहारव्यतिरेकेण, ते चेत् पितृमत्पुत्र-पुत्रवत्पित्रादयः प्रधानैरर्पितव्यवहाराधिकारास्तदा तत्कृता व्यवहाराः सिध्येयुरेवेत्यर्थः ।

निसृष्टव्यवहारेष्वपि तेषु विशेषमाह — **तत्रापी**ति । निसृष्टव्यवहारेष्वपि मध्ये, क्रुद्धेन जिघांसुना, आर्तेन दुःखिना, मत्तेन हर्षवता, उन्मत्तेन विभ्रान्तचित्तेन, अवगृहीतेन वा दण्डितेन वा, कृताः व्यवहाराः न सिध्येयुः । **कर्तृकारयितृश्रोतॄणां पृथग् यथोक्ता दण्डा** इति । ये प्रतिषिद्धान् व्यवहारान् कुर्वन्ति कारयन्ति शृण्वन्तश्च साक्षीभवन्ति, तेषां प्रत्येकं यथाविहिताः दण्डा भवन्ति ।

सर्वापवादमाह — **स्वे स्वे** इति । स्वे स्वे वर्गे स्वकरणकृताः स्वस्वजातौ स्वक्रियाक्रमकृताः, स्वे स्वे देशे अरण्यादौ अरण्यादिचरैः स्वकरणकृताः, स्वे स्वे काले च रात्रौ रात्रिव्यवहारिभिः दिवा दिवाव्यवहारिभिश्च स्वकरणकृताश्च, सर्वव्यवहाराः सिध्येयुः । संपूर्णचाराः राजमार्गो दिवा अर्थिप्रत्यर्थिसान्निध्यमित्येवमाद्यपेक्षितदेशकालादिसमुदाचारश्चारः, क्वचिदाचार इत्येव पाठः । स संपूर्णः अविकलनिर्वृत्तः येषु ते तथाभूताः, व्यवहाराः, शुद्धदेशाः दिशन्ति उपदिशन्ति स्वोपलब्धमर्थं प्राड्विवाकाय ज्ञापयन्तीति देशाः साक्षिणः ते शुद्धाः परोक्षित्वादिदोषरहिताः येषु ते तथाभूताः, दृष्टरूपलक्षणप्रमाणगुणाः दृष्टं साक्षात्कृतं रूपमाकृतिः लक्षणं व्यावृत्तिचिह्नं प्रमाणं माषगुञ्जादि आढकद्रोणादि वितस्तिहस्तादि च गुणः शुक्लनीलभ्राजिष्णुत्वादिश्च येषु ते तथाविधाः, सर्वव्यवहाराः, सिध्येयुः ।

**मध्यमचरितेनोदासीनचरितं व्याख्यातम्। उदासीनश्चेद् मध्यमं लिप्सेत, यतः शत्रुमतिसन्दध्यान्मित्रस्योपकारं कुर्यात्, मध्यममुदासीनं वा दण्डोपकारिणं लभेत, ततः परिणमेत।**

**एवमुपगृह्यात्मानमरिप्रकृतिं कर्शयेत्। मित्रप्रकृतिं चोपगृह्णीयात्।**

**सत्यप्यमित्रभावे तस्यानात्मवान् नित्यापकारी शत्रुः शत्रुसहितः पार्ष्णिग्राहो वा व्यसनी यातव्यो व्यसने वा नेतुरभियोक्तेत्यरिभाविनः।**

---

मध्यमोक्तमुदासीनेऽतिदिशति — **मध्यमचरितेनेत्यादि**। मध्यमस्य याः प्रकृतय उक्ता आत्मा तृतीया पञ्चमी चेति प्रकृतयः, याश्च विकृतयो द्वितीया चतुर्थी षष्ठी च ता उदासीनस्यापि समानाः। या च मध्यमे विजिगीषोर्वृत्तिरुक्ता सोदासीनेऽपि समानेत्यर्थः। तत्र विशेषमाह — **उदासीनश्चेदिति**। उदासीनो यदि मध्यममभियुञ्जीत, तदा यस्मिन् पक्षे मध्यमस्योदासीनस्य वा प्रविष्टः स्वशत्र्वतिसन्धानं स्वमित्रोपकारं च कुर्यात्, मध्यममुदासीनं वा सैन्यदानोपकारिणं लभेत, तं पक्षं परिणमेत प्रविशेदित्यर्थः। इह 'कुर्यादि'त्येतदुत्तरम् 'उदासीनं वा दण्डोपकारिणम्' इत्येव मूलादर्शेषु पाठः उपलभ्यते। किन्तु भाषाम्वरसात् 'मध्यममुदासीनं वा दण्डोपकारिणम्' इति पाठः साधुतरोऽनुमितः। एवमुदासीनचरितमुक्तम्।

अथ मण्डलचरितमुच्यते — **मण्डलचरितमिति** सूत्रम्। मण्डलमरिमित्रात्मकं, तस्मिन् विजिगीषोर्वृत्तिरभिधीयत इति सूत्रार्थः।

**एवमिति**। यथोक्तया मध्यमोदासीनवृत्त्या, आत्मानम्, उपगृह्य उपचितशक्तिं कृत्वा, अरिप्रकृतिं सामन्तं, कर्शयेत् क्षीणशक्तिं कुर्यात्। मित्रप्रकृतिं भूम्येकान्तरम्, उपगृह्णीयात् सामदानादिना स्वायत्तं कुर्यात्।

तत्र सामन्ता अरिशब्दितास्तावत् त्रिप्रकाराः — अरिभाविनो मित्रभाविनो भृत्यभाविन इति। तान् क्रमेण वक्ष्यन् प्रथमम् अरिभाविन आह — **सत्यप्यमित्रभावे तस्येत्यादि**। विजिगीषुं प्रति भूम्यनन्तरत्वेनामित्रत्वे तुल्येऽपि अनात्मवत्त्वादिभिरष्टभिर्विशेषैररिभाविनोऽष्टरूपा भवन्तीत्यर्थः। तत्र अनात्मवान् अवश्येन्द्रियः। नित्यापकारी सदापकारशीलः। शत्रुः निष्कारणं द्विषन् द्विष्यमाणश्च। शत्रुसहितः शत्रुसहायः। पार्ष्णिग्राहः पृष्ठकोपोत्पादकः।

**एकार्थाभिप्रयातः पृथगर्थाभिप्रयातः सम्भूययात्रिकः संहित-प्रयाणिकः स्वार्थाभिप्रयातः सामुत्थायिकः कोशदण्डयोरन्यतरस्य क्रेता विक्रेता द्वैधीभाविक इति मित्रभाविनः ।**

**सामन्तो बलवतः प्रतिघातोऽन्तर्धिः प्रतिवेशो वा बलवतः पार्ष्णिग्राहो वा स्वयमुपनतः प्रतापोपनतो वा दण्डोपनत इति भृत्य-भाविनः सामन्ताः ।**

**तैर्भूम्येकान्तरा व्याख्याताः ।**

---

व्यसनी बन्धुमरणादिदुःखी । यातव्यः अभियोक्तव्यः । व्यसने वा नेतुरभि-योक्ता विजिगीषोर्व्यसनमुपलभ्याभियोगकर्ता च ।

मित्रभाविन आह —**एकार्थाभिप्रयात** इति । यमर्थमुद्दिश्य विजि-गीषुः प्रयातः तमेवार्थं साधयितुं भिन्नदिक्कं प्रयातः, पृथगर्थाभिप्रयातः विजि-गीषौ भूम्युद्देशेन प्रयाते हिरण्योद्देशेन प्रयातः, सम्भूययात्रिकः विजिगीषुणा समवेत्य प्रयातः, संहितप्रयाणिकः विजिगीषुणा सह सन्धिं कृत्वा 'त्वमितो याहि अहमन्यतो यास्यामी'ति परिभाष्य प्रयातः, स्वार्थाभिप्रयातः विजिगीषु-कार्यसाधनार्थं प्रयातः, सामुत्थायिकः सम्भूय शून्यनिवेशनादिकर्मानुष्ठानसंविदा प्रवृत्तः, कोशदण्डयोरन्यतरस्य क्रेता विक्रेता कोशेन दण्डस्य दण्डेन कोशस्य वा क्रयकर्ता विक्रयकर्ता च, द्वैधीभाविकः द्वैधीभावगुणोपयोगी कृतसन्धिः पार्ष्णिग्राहादिरित्यर्थः, इति, अष्टाविति शेषः, मित्रभाविनः ।

भृत्यभाविन आह —**सामन्त** इति । बलवतो राज्ञः, प्रतिघातः प्रति-हन्ता 'प्रतिघातो बलवतो दुर्गाटव्यपसारवानि'त्युक्तलक्षणः, अन्तर्धिः 'अरेर्ने-तुश्च मध्यस्थो दुर्बलो भूम्यनन्तरः' इत्युक्तरूपः, प्रतिवेशो वा पार्श्वयोर्भूम्य-नन्तरो वा, इत्येवं त्रिरूप इति शेषः, सामन्तो भूम्यनन्तरो दुर्बलः, बलवतः पार्ष्णिग्राहो वा बलवतः पार्ष्णिं यो दुर्बलो गृह्णाति स वा यातव्यसाहाय्यकारी स्थानीयबाधक इत्युभयरूपः, स्वयमुपनतः स्वयमेवोपगम्याश्रयी प्रतापोपनतो वा प्रतापप्रणतो वेति द्विरूपो दण्डोपनतः, इत्येते भृत्यभाविनः सामन्ताः ।

**तैरिति** । तैः 'सत्यप्यमित्रभावे तस्ये'त्यादिना त्रिरूपतया व्याख्या-तैरमित्रैः, भूम्येकान्तराः व्याख्याताः मित्राण्यपि व्याख्यातप्रायाणि । अमित्रे-ष्विव मित्रेष्वपि अरिभावित्वमित्रभावित्वभृत्यभावित्वरूपा भेदा भवन्तीत्यर्थः ।

तेषां शत्रुविरोधे यन्मित्रमेकार्थतां व्रजेत् ।
शक्त्या तदनुगृह्णीयाद् विषहेत यया परम् ॥
प्रसाध्य शत्रुं यन्मित्रं वृद्धं गच्छेदवश्यताम् ।
सामन्तैकान्तराभ्यां तत् प्रकृतिभ्यां विरोधयेत् ॥
तत्कुलीनावरुद्धाभ्यां भूमिं वा तस्य हारयेत् ।
यथा वानुग्रहापेक्षं वश्यं तिष्ठेत् तथा चरेत् ॥
नोपकुर्यादमित्रं वा गच्छेद् यदतिकार्शितम् ।
तदहीनमवृद्धं च स्थापयेन्मित्रमर्थवित् ॥
अर्थयुक्त्या चलं मित्रं सन्धिं यदुपगच्छति ।
तस्यापगमने हेतुं विहन्यान्न चलेद् यथा ॥

---

मित्रेष्ववस्थाविशेषे वृत्तिविशेषानाह — तेषामिति । तेषां भूम्येकान्तराणां मित्राणां, शत्रुविरोधे शत्र्वभियोगे प्राप्ते, यत् मित्रम्, एकार्थतां शत्रुणा समानार्थत्वं सन्धिमित्यर्थः, व्रजेत्, तत्, शक्त्या कोशदण्डादिकया, अनुगृह्णीयात् उपचितं कुर्यात् । कीदृश्या शक्त्या, यया स्वीकृतया परं शत्रुं विषहेत अभिभवेत् ॥

प्रसाध्येति । यत् मित्रं, शत्रुं प्रसाध्य जित्वा, वृद्धं सत्, अवश्यताम् अविधेयत्वं, गच्छेत्, तत् मित्रं, सामन्तैकान्तराभ्यां प्रकृतिभ्याम् अरिप्रकृतिमित्रप्रकृतिभ्यां, विरोधयेत् ॥

तत्[illegible]

कुलीनेन ज्ञातिना अवरुद्धेन पुत्रादिना च, तस्य भूमिं हारयेत् । अथवा, अनुग्रहापेक्षं वश्यं यथा तिष्ठेत् स्वसाह्यार्थि स्वविधेयं च यथा मित्रं तिष्ठेत्, तथा चरेद् अनुतिष्ठेत् ॥

यत् मित्रं प्राप्तातिकर्शनं सत् स्वस्योपकारं न कुर्यात् शत्रुणा वा संसर्गं गच्छेत्, तत् मित्रं हानिरहितं वृद्धिरहितं च स्थापयेत् स्वार्थसाधनपण्डितो विजिगीषुरित्याह — नोपकुर्यादित्यादि ॥

चलमित्रविषयेऽनुष्ठेयमाह— अर्थेत्यादि । यच्चलं मित्रं प्रयोजनयोगेन सन्धिमात्मना सह गच्छति, तत् पुनर्यथा न चलेत् तथा तस्यापगमनकारणं भूयोऽर्थलिप्सारूपं स्वयं तद्दानेन विहन्यात् ॥

अरिसाधारणं यद्वा तिष्ठेत् तदरितः शठम् ।
भेदयेद् भिन्नमुच्छिन्द्यात् ततः शत्रुमनन्तरम् ॥

उदासीनं च यत् तिष्ठेत् सामन्तैस्तद् विरोधयेत् ।
ततो विग्रहसन्तप्तमुपकारे निवेशयेत् ॥

अमित्रं विजिगीषुं च यत् सञ्चरति दुर्बलम् ।
तद् बलेनानुगृह्णीयाद् यथा स्यान्न पराङ्मुखम् ॥

अपनीय ततोऽन्यस्यां भूमौ वा सन्निवेशयेत् ।
निवेश्य पूर्वं तत्रान्यं दण्डानुग्रहहेतुना ॥

अपकुर्यात् समर्थं वा नोपकुर्याद् यदापदि ।
उच्छिन्द्यादेव तन्मित्रं विश्वस्याङ्कमुपस्थितम् ॥

अरिविजिगीष्वोः समानं शठं यत् मित्रं, तत् शत्रुसकाशात् भेदयेत् भिन्नं चोच्छिन्द्यात्, तदुच्छेदानन्तरं च शत्रुमुच्छिन्द्यादित्याह— **अरिसाधारणमि**त्यादि ॥

यद् अरिविजिगीष्वोरुदासीनं तिष्ठति, तत् मित्रं, सामन्तैः विरोधयेत्, सामन्तारब्धविग्रहोपजातसन्तापं च कृत्वा स्वकर्तव्योपकारसापेक्षतां नयेदित्याह —**उदासीनं चे**त्यादि ॥

यत् मित्रं दुर्बलं स्वबलाधानार्थं शत्रुविजिगीषू उभावप्याश्रयति, तत् स्वबलदानेन तथानुगृह्णीयात् यथा शत्रुणा न तत् संसृज्येतेत्याह — **अमित्रं विजिगीषुं चे**त्यादि ॥

उक्तस्योभयमुखप्रेक्षिणो दुर्बलस्यानुग्रहणेऽन्यं प्रकारमाह — **अपनीये**ति । पूर्वोक्तं मित्रं, ततोऽपनीय तदीयभूमेरपगमय्य, अन्यस्यां भूमौ वा शत्रुसाध्यनिरपेक्षायां स्वभूमौ वा, सन्निवेशयेत् स्थापयेत् । तदीयभूमौ कर्तव्यमाह—तत्र तदीयभूमौ, दण्डानुग्रहहेतुना सैन्येनानुग्रहकरणार्थम्, अन्यं तत्समर्थं, पूर्वं मित्रापनयनात् प्रागेव, निवेश्य स्थापयित्वा ॥

यत् मित्रं विजिगीषोरपकारं कुर्यात् समर्थं वा सद् उपकारम् आपदि न कुर्यात्, तत् मित्रम् उपायैरात्मनि विश्वासयुक्तं कृत्वा स्वोत्सङ्गगतं विजिगीषुरुच्छिन्द्यात् न तूपेक्षेतेत्याह --- **अपकुर्यादि**त्यादि ॥

मित्रव्यसनतो वारिरुत्तिष्ठेद् योऽनवग्रहः।
मित्रेणैव भवेत् साध्यश्छादितव्यसनेन सः॥

अमित्रव्यसनान्मित्रमुत्थितं यद् विरज्यति।
अरिव्यसनसिद्ध्या तच्छत्रुणैव प्रसिध्यति॥

वृद्धिं क्षयं च स्थानं च कर्शनोच्छेदनं तथा।
सर्वोपायान् समादध्यादेतान् यश्चार्थशास्त्रवित्॥

एवमन्योन्यसञ्चारं षाड्गुण्यं योऽनुपश्यति।
स बुद्धिनिगलैर्बद्धैरिष्टं क्रीडति पार्थिवैः॥

इति कौटलीयार्थशास्त्रे षाड्गुण्ये सप्तमाधिकरणे अष्टादशोऽध्यायः
मध्यमचरितमुदासीनचरितं मण्डलचरितम्,
आदितः षोडशशततमः॥

एतावता कौटलीयस्यार्थशास्त्रस्य षाड्गुण्यं
सप्तममधिकरणं समाप्तम्॥

योऽरिर्विजिगीषोर्मित्रव्यसनवशात् प्रतिबन्धं विनैव वृद्धिं प्राप्नुयात्, सः मित्रेणैव स्वप्रयत्नप्रशमितव्यसनेन स्वप्रयत्नाप्रकाशितव्यसनेन वा साधनीय इत्याह— मित्रव्यसनतो वारिरित्यादि॥

यत् मित्रम् अमित्रस्य बलादिव्यसनाद् वृद्धिं प्राप्तं सद् विजिगीषुविरक्तं भवति, तत् मित्रं विजिगीषुररिव्यसननिवर्तनपूर्वमरिणैवोद्योजितेन साधयेदित्याह — अमित्रव्यसनान्मित्रमित्यादि। अरिव्यसनसिद्ध्या अरिव्यसनस्यापोहेनेत्यर्थः॥

वृद्धिमिति। योऽर्थशास्त्रवित् स तु, वृद्धिं क्षयं स्थानं च, तथा कर्शनोच्छेदनं कर्शनमुच्छेदनं च, एतान् सर्वोपायान् सर्वांश्च सामदानादीनुपायान्, समादध्यात् सम्यक् तत्तद्विषयसम्प्रधारणपूर्वं प्रयुञ्जीत॥

यथाप्रपञ्चितार्थसम्यक्प्रयोगप्रयोजनाख्यानेनाधिकरणमुपसंहरति — एवमिति। प्रपञ्चितैः प्रकारैः, यः, अन्योन्यसञ्चारं परस्परोपश्लिष्टं, षाड्गुण्यम्, अनुपश्यति अनुसन्धत्ते, सः, बुद्धिनिगलैः बुद्धिभिरेव बन्धन-

**शृङ्खलाभिः, बद्धैः स्वायत्ततां नीतैः, पार्थिवैः क्रीडासाधनैः, इष्टं यथाकामं क्रीडति ॥**

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
षाड्गुण्याख्याधिकरणं सप्तमं समपूर्यत ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहारा-
भिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्याय-
गणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां श्री-
मूलाख्यायां षाड्गुण्ये सप्तमाधिकरणे अष्टादशोऽध्यायः
मध्यमचरितोदासीनचरितमण्डलचरितानि,
आदितः षोडशोत्तरशततमः ॥
षाड्गुण्यं सप्तममधिकरणं
समाप्तम् ॥

---

द्वितीयसम्पुटः समाप्तः ।
शुभं भूयात् ।

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनंप्रबन्धः (Kavya) Syânandûrapuravarnanaprabandha by H. H. Svâti Sri Râma Varma Mahârâjah, with the commentary Sundarī of Râjarâja Varma Koil Tampurân. | 2 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dikshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनंजयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakra kavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râja chûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Srî Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pâda. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswamin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part II. 2nd Kânda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvatî. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II.) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankâra) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part III. 2nd Kânda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part IV. 3rd Kânda) | 1 | 8 | 0 |
| No. 53—शब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Srî Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III.) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Râghavânanda | [illegible] | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânanda Sarasvati (Part IV.) | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kâvya) by Bharavi with the commentary Sabdârthadîpika of Chitrabhanu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kâvya) by Kâlidasa with the commentary Pradîpa of Dakshinâvartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni. | 3 | 8 | 0 |
| No. 66— महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda | 2 | 8 | 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara. (Part I. 1–6 Patalas) | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Sri Bhojadeva with the commentary Tâtparyadîpikâ of Sri Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part I. Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |
| No. 71— तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part II. 7—12 Patalas). | 3 | 8 | 0 |
| No. 72— ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part II. Mantrapada) | 4 | 0 | 0 |
| No. 73 — ईश्वरप्रतिपत्तिप्रकाशः (Vedanta) by Sri Madhusudanasarasvati | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 74— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasâstra) with the commentary Bâlakrîdâ of Visvarûpâchârya. (Part I—Âchâra and Vyavahâra Adhyâyas) | 4 | 0 | 0 |
| No. 75—शिल्परत्नम् (Silpa) by Srîkumâra (Part I). | 3 | 4 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः (Part II). | 3 | 4 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः by Isanasivagurudeva-misra (Part III. Kriyapada 1—30 Patalas). | 3 | 4 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् with the commentary Anavila of Haradattacharya. | 5 | 0 | 0 |
| No. 79—अर्थशास्त्रम् of Kautalya with the commentary by Mahamahodpahyaya T. Ganapati Sastri (Part I—1 & 2 Adhikaranas). | 8 | 0 | 0 |
| No. 80—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part II—3 to 7 Adhikaranas). | 8 | 0 | 0 |

*Apply to:—*

*The Curator,*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*